प्राहुः सूर्यसंस्तवम् BṛDe. 3. 44; तत एनं परिष्वज्य सखा विप्रो महातपाः। अकृतव्रणः शुभैर्वाक्यैराश्वासयदनेकधा MahāBhā. v. 185. 14; भृशमुद्वेजितः संख्ये शरजालैरनेकशः (v.l.°धा) MahāBhā. vii. 120. 24; भद्राणां षष्टिवर्षाणां प्रस्तुतानामनेकधा। कुञ्जराणां सहस्रस्य बलं समधिगच्छति SuśruS. iv. 29. 16; जप्यानि ब्रह्मसूक्तानि शिवसूक्तानि चैव हि। वैष्णवानि च सूक्तानि तया (?था) सौराण्यनेकधा BṛParāSm. 3. 2; बलभद्रो महावीर्यो बाणसैन्यमनेकधा विव्याध बाणैः ViṣṇuP. v. 33. 29; पठित्वा चतुरो वेदान्सर्वशास्त्रमनेकधा, यो हि ब्रह्म न जानाति मूर्खः पाठे शठो यथा PārāŚi. 148; न सा गतिरनेकधा गतवता न या गाहिता SubhāRaSaṁ. 248; तैरिह समये घटशरावानुपक्रीय विक्रीयानेकधा वृद्धैस्तैर्धनैः पुनः पूगवस्त्रादिकमुपक्रीय लक्षसंख्यातानि धनान्युत्पाद्य विवाहचतुष्टयं करोमि Hitopa 4. 20 (6). सोऽपि ... इत्यनेकधा तयोराशंसयांचकार NalaCam. 3. 6 (13); मुनिस्तु ... वासश्च तवैवोचितम् इत्यनेकधा श्लिष्टालापलीलयातिवाह्य ... ताम् ... अम्बरतलमुदपतत् NalaCam. 3. 17 (18); अनेकधाराधितोऽपि स देवो भास्करः शुचिः। न ददाति वरम् SkandP. vii (1). 306. 19; मर्मादीनि निषिद्धानि वास्तुकर्मण्यनेकधा VāstuVi. 6. 8; अभ्यासिना विभोक्तव्यं स्तोकं स्तोकमनेकधा ŚivS. 3. 45; दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम्।... अत्रानेकधा दशशब्द आवर्तते SaraKaṇṭhā. 263. 3; कुक्षौ वेदना जायते भृशम्। ... हितं मितं च भोक्तव्यं स्तोकं स्तोकमनेकधा VarāU. 5. 9; नराः पापेन कर्मणा। ... भ्रज्यन्ते चातपे तप्ते लोहभाण्डेष्वनेकधा ŚivaP. v. 9. 14 (416A. 10); अनेकधा (Read°धा) युत्क्षेत्रे रिपुहस्तिमस्तकगलन्मुक्तौघ(बीज)वाकृते जाताः EI. iii. 85. 36; षाण्मासिकीं रात्रिमसर्वरूपां ततान स्वात्मानमनेकधा यः GopāKeCan. 150. 19; कीदृशी निरयभूरनेकधा सेव्यते परमपापकर्मभिः। ... नरकपालरचिता VidaMuMa. 1. 39; अनेकधा सखि मया ... पीतः ... पुंस्कोकिलानां ध्वनिः SubhāRaK. 15. 17; SaduktiKa. 70. 26; पदवत्पौर्वापर्येणप्रयुज्यमानानां वाक्यानामप्यनेकधोपलभ्या(?म्भा)त् PramāMī. 68. 26 (on ii. 1. 34); राजगन्धर्वा नवगीतिभिः। अगायंस्त्रिजगन्नाथगुणग्रामाननेकधा MalliC. 5. 260; भणन्त्यो रासकान् देव्यः प्रस्खलन्ति पदे पदे। स्मरन्त्यः स्वामिनः सौम्यान् गुणग्रामाननेकधा MalliC. 8. 569; निर्जरैरनेकधाप्युक्तो हठो नासौ निजाग्रहात्। पश्चाद् व्याजुघुटे द्रोणीम् PrabhāC. 209. 26; अनेकधा विससृपुः ... शराः RāghPāṇ. (Ka.) 4. 26; दानानि ... °योगीन्द्रादीनामनेकधा दत्तानि SamyaKau. 58. 5; त्वं धन्योऽसि, त्वमुत्तमसंगे उत्तमो जातोऽसि इत्येवमनेकधा स्तुतः SamyaKau. 86. 13; इत्यन्योन्यमनेकधा मृगवधव्यापारपारंगमैः ŚārṅgaPa. 589; रामो मातुः सेवकेभ्यो ददौ धनमनेकधा AdhyāRā. ii. 4. 83; उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा SāhiDa. 348. 7; वृत्तं सर्वमनेकधा जनपतेरेवं चमूनिर्गमे SiṁhāDvā. 177.1; प्रधानानाङ्ग्वस्त्वेवं कल्पयेत् प्रतिमादिषु। ताभ्यस्त्वनेकधा नाडी सर्वाङ्गं तु समावृताः ŚilpaRa. ii. 18. 33; यजनानि ... अनेकधा प्रस्तुतविघ्नितानि। त्रातुं क्षमः ... सलक्ष्मणः ... रामभद्रः Rāgh. 2. 36; **1B** more than once अम्भश्चरस्थलचरखचराणां परेच्छया। भवामि रूपान्तरभृदेकधानेकधाप्यहम् TriṣaŚaPuC. ii. 6. 255; मासाब्दयुगकल्पेषु गतागम्येष्वनेकधा। नोदेति ... संवित् PañcDa. 1. 7; **2A** in various ways, variously दिव्यान्तरिक्षभौमानामुत्पातानामनेकधा। शमयिता ब्रह्मवेदज्ञस्तस्माद्रक्षिता भृगुः AVPari. 2(2). 3; दीनानाथान्धकृपणान्भक्ष्यभोज्यैरने-कधा। अन्नपानविहीनांश्च विशेषेण प्रपूजयेत् AVPari. 19 (5). 3; 70 (1). 2; जगत् कृत्स्नं प्रविभक्तमनेकधा। अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा MahāBhā. vi. 33. 13=BhagGī. 11. 13; अपरः। जहार समरे प्राणान्नानाशस्त्रैरनेकधा MahāBhā. viii. 19. 66; यस्त्यक्त्वा रूपमाद्यं प्रभवति जगतोऽनेकधानुग्रहाय YogBh. 1. 7 (on 1.1); तेभ्यस्ते नियतात्मानः पुत्राः शशंसुरनेकधा प्रायश्चित्तानि VāyuP. ii. 10. 22; अनेकधा विभक्ताङ्गो महायोगी जनार्दनः BrahmāṇḍP. i. 19. 180; एतावतापि कालेन (v.l. अनेकधा कालं) मैत्रीं कृत्वा PañcT. 4. 4 (5) (377. 5); लोकानां प्रलयोद्भवस्थितिविभुश्चानेकधा यः श्रुतौ ... त्रैलोक्यदीपो रविः Bṛhajjā. 1. 1; सञ्चिन्त्यं बलसहितैरनेकधा स्वम् Bṛhajjā. 10. 4; न धर्मः संशयकारणमित्यनेकधा समर्थितम् NyāyVār. 100. 3 (on i. 1. 23); इति शासति सेनान्यं गच्छतस्ताननेकधा। निषिध्य हसता किंचित्तस्थे तत्रान्धकारिणा Kirātā. 15. 29; SaraKaṇṭhā. 326. 2; VākyaPa. 1. 4; अतः परं चारुरनेकधा परो गिरामलङ्कारविधिर्विधास्यते Kāvyālaṅ. (Bhā.) 2.96; कर्मकर इति विप्रैः सुसहाय इति शत्रुयोधैरेकमप्यनेकधा गृह्यमाणम् ... हर्षमद्राक्षीत् HarṣaC. 119. 3; अनेकधा सुरतलास्यम् ... बबन्ध AvantiKa. 31. 11; ततश्चानेकधा प्रायः पवनो यत्प्रकुप्यति AṣṭāSaṁ. i. 19. 16 (15); AṣṭāHṛ. i. 4. 24; परापरविभागेन भिद्यते ते त्वनेकधा MṛgendraT. i. 2. 9; गुरोर्लब्ध्वा ज्ञानमनेकधा प्रवचनैर्मन्वादयः प्राणयन् धर्मम् MahāViC. 4. 25; तदेवमनेकधा मूलविप्रतिपत्तौ सत्यां प्रत्यक्षाद्यनुप्रवेशव्यवच्छेदेन ... चोदना प्रमाणत्वेन प्रतिज्ञायते TātpaṬ. (U.) 30. 22 (on 2.1); क्वचित्प्राणादिका ...। क्वचित्तेजआदिका ...। क्वचित्स्वयंकर्तृकैव व्याक्रिया जगतो निगद्यते ...। एवमनेकधा विप्रतिपत्तेर्वस्तुनि BrahmSūBh. (Śaṅ.) 250.16 (on i. 4. 14); श्रुतिस्तु श्रुत्यन्तरेष्वनेकधा श्रूयते BrahmSūBh. (Śaṅ.) 821. 2 (on iv. 3. 1); अनेकधा अस्तिनास्तीत्यादिलक्षणा चिन्ता गतिः KaṭhUBh. 126. 9 (on 2. 8); प्रतीयते

प्रस्तुतमित्यर्थः अनेकधा उपास्यत्वादुद्गीथस्य ChāndoUBh. 29. 8 (on i. 3. 1); 55. 6 (on i. 8. 1); अग्नीषोमौ अत्नन्नभूती मे मम बहुधा अनेकधा प्रजाः करिष्यतः PraśnaUBh. 240. 18 (on 1. 4); प्राणो बाह्याधारभेदेष्वनेकधा विस्तृतः BṛĀraUBh. 216. 2 (on ii. 1. 1); अनेकधा चरणफलं श्रममुपलभ्येत्यर्थः BṛĀraUBh. 555. 15 (on iv. 3. 15); ब्रह्म प्रजापतिप्रबन्धपरम्परया आगत्य अस्मास्वनेकधा विप्रसृतम् BṛĀraUBh. 817.11 (on vi. 5. 4); 'यततो हि' इत्युपन्यस्तस्यार्थस्य अनेकधा उपपत्तिमुक्त्वा ... उपसंहरति GītāBh. (Śaṅ.) 67.11 (on 2. 68); अनेकधा देवपितृमनुष्यादिभेदैः GītāBh. (Śaṅ.) 307. 7 (on 11. 13); यद् विभाति सदनेकधा भ्रमात् ... ब्रह्म तत्त्वमसि ViveCū. 264; तानहं कीर्तयिष्यामि भेदैर्जातानेकधा AśvaCi. 3. 1; सीमा च प्रतिजागर्तृदोषादनेकधा भुज्यते BālaKrī. i. 212. 2 (on 2. 25); मनसि सदा विस्फुरणमनेकधाभिधेयस्य ... यस्यामसौ शक्तिः Kāvyālaṅ. (Ru.) 1. 15; तदेतत्रेय इत्यादिवाक्येभ्योऽनेकधा श्रुतम् BṛĀraUBhVā. (Sambandha.) 1017; संकल्पमात्रेणानेकधा भावं दर्शयित्वा उपसंहरति BrahmSūBh. (Bhā.) 97. 18 (on ii. 1. 14); विस्तारिचक्रमिव राशिमयं बिभर्ति योऽनेकधा मकरकुम्भकरालशोभम् HarVi. 31. 33; आत्मैव स्वाविद्यया जडमिदं शून्यमिदं ज्ञातमिदमज्ञातमिदमिति चानेकधा भाति IṣṭaSi. 205.13; इह द्वितीये पादेऽनेकधा पाठप्रतिपत्तिः ManuBh. i. 258. 26 (on 3. 110); जिनैश्च मिथ्यात्वमनेकधोदितं भवार्णवभ्रान्तिकरं शरीरिणाम् SubhāRaSaṁ. 129; गगनतलं प्रयातु विदधातु सुगुप्तमनेकधायुधैस्तदपि न पूर्वकर्म सततं बत मुञ्चति देहधारिणम् SubhāRaSaṁ. 374; भजति तेन विकारमनेकधा गुणयुतेन सुरा परिवर्ज्यते SubhāRaSaṁ. 521; जीवनाशनमनेकधा दधद्ग्रन्थमक्षरमणीयतो नरः SubhāRaSaṁ. 630; अनेकधा यः किल पक्षपातं सदा सदम्भोजगतः करोति NalaCam. 2. 20; राजपुत्राः ... अनेकधाकृतप्रतिभागुणस्तुतयश्च राजसूनोः पुनः प्रस्तुतकाव्यवस्तुविचारनिष्ठाः समरकेतुवर्जमतिष्ठन् TilaMañ. 110. 22; सा चेयं देवी ...। प्रलोभ्यमानाप्यनेकधा विद्याधरेन्द्रकुलकुमारैः ... नाभिलषति पाणिग्रहणमङ्गलम् TilaMañ. 169. 10; 193. 16; प्रयोजनमनेकधा व्याख्यातृभिर्विकल्पितम् Kāśi. i. 7.12 (on 1.16); आत्मा ... य एष स्वप्ने महीयमानो वनितादिभिरनेकधा स्वप्नोपभोगान् भुञ्जानो विहरति Bhām. 218. 14 (on i. 3. 19); रत्यादिरूपेणानेकधाविर्भवतोऽभिवर्धमानस्य परप्रकर्षगामिनः शृङ्गारस्य मध्यावस्थां सूचयति SaraKaṇṭhā. 705.2; बाह्यस्य वाक्यार्थत्वे तस्यैकत्वादनेकधा प्रतिभानं नोपपद्यते NyāyRa. 937. 18 (on 7. 323); वसतश्च तवात्र कालेन ... संगतिरित्यादिभिरनेकधा प्रबोध्य तं चित्रशिखं तत्रैव सुस्थितस्वान्तमकरोत् UdaySuKa. 38. 22; 74. 31; 79. 11; क्षत्रियकुमाराः ... प्रवीराः ... इत्याद्यनेकधा प्रकीर्णो भूयसा प्रसरेण समागतो लोकः UdaySuKa. 145. 28; अकार उकारो मकार इति ता (व्याहृतयः) अनेकधा समभवत्तदेतदोमिति NārāyU. 4; एवं प्राणमधोकारं यस्मात् सर्वमनेकधा। युनक्ति युञ्जते वापि तस्माद्योग इति स्मृतः MaitrīU. 430. 12 (6); जयार्थी तु वर्णलक्षं जपेन्मनुम्। ... पञ्चाशन्मातृकामन्त्रवर्णप्रत्येकपूर्वकम्। लक्ष्मीवाङ्मन्मथादिश्च तारादिः स्यादनेकधा RāmRaU. 2. 17; तेषु मन्दिरेषु शय्याभोजनशृङ्गारा अनेकधा रचिता भवन्ति SāmaraU. 223. 16; (शरीरस्य) नाड्यः ... पुण्डरीकं कुमुदमिवानेकधा विकसितम् SubāU. 4. 11; व्यथन्ते रक्तपित्तोत्थैस्तदा रोगैरनेकधा SamarāSū. 33. 62; द्वयोर्व्यञ्जनसमुदाययोः परस्परमनेकधा सादृश्यं संख्यानियमः AlaṅkāSa. 20. 2; एकाक्षरस्वरव्यञ्जनसमुदाययोरनेकधापि साम्ये ... वृत्त्यनुप्रास एव AlaṅkāRa. 3 (23); एवमनेकधा विनिश्चित्य दन्तिलम् ... स्वाधिकारे नियोजयामास Pañcā. 21.9; कास्मीर(Read काश्मीर) द्रवशीकरैर्हतिमुखोन्मुक्तैरति व्याकुलः पौरैः स्वैरमनेकधायमधुनारब्धो मधोरुत्सवः EI. viii. 104. 20; क्षेत्रं चित्रमनेकधोरु फलति प्राप्यात्मनोऽनर्घ्यताम्' NyāySu. (So.) 1. 6 (on i. 2. o); अपकर्षति दोषान्वै आस्थापनमनेकधा Hastyāyur. 603.10 (4.5); दशावस्थत्वमाचार्यैः प्रायोवृत्त्या तु दर्शितम्। महाकविप्रबन्धेषु दृश्यते तास्त्वनेकधा BhāvPra. (Śā.) 85. 20 (4); एकाङ्गं वा धनुर्वाते कम्पवाते च मूर्च्छिते। ज्वरांश्च विषमान्सर्वान्हन्ति रोगाननेकधा RasRaSa. 15. 54; नाशयेत्सूततैलं तद्वातरोगाननेकधा RasRaSa. 21. 148; प्रक्रमभङ्गः ... अनेकधा भवति Ekāva. 6. 3 (5) (168.6); उपमेयोपमायामुपमानोपमेययोरनेकधा साम्यप्रतिपादनम् PratāYaBhū. 353. 10; अनेकधा जनकं बोधयित्वा ... संन्यासं प्रतिजज्ञे JīvanVi. 4. 19; कार्यद्वारेषु मन्त्रबहिःस्थलेषु मन्त्रविदः स्वमन्त्रिभिन्नान्। अनेकधा अनियमितप्रकारेण प्रचारयेत् RājNīRa. 29. 12; कालयन्तं हरीन्वेगात् ... चूर्णयन्तं मुद्गरेण पाणिपादैरनेकधा AdhyāRā. vi. 8. 8; सूक्ष्माव्यक्तादिदेहः परिणमति यतोऽनेकधा स्थूलवृत्त्या TattvMu. 3. 25; अनेकधाविस्तृ[त] वंश [वृद्धेः] कुले बभौ सोभितसूनुसाल्हः EI. xi. 66. 10; (ब्राह्मणः) एवमनेकधा पुत्राय नीतिमुपदिश्य स्वयं वाराणसीं जगाम SiṁhāDvā. 62.6 (17); अनेकधाष्टापदसारदानदक्षो वशीभूततराक्षचारः। यः (जयपालः) HammīMaKā. 1. 43; यदेवमनेकधा कुलक्षयमध्यक्षयन्नपि प्राणिमि KaṁVa. 2. 24 (1); अत्र च प्राचामर्चां चानेकधा दर्शनं व्यवस्थितम् RasGaṅ. 390. 3; ततः स तासाम् ... अनेकधा रावणहस्तपूर्वकप्रसिद्धयन्त्रस्वनरक्तिपाटवम् ... परीक्ष्य Raghunā. 11. 27; प्रणिपत्य तं परिचरन्त्यनेकधा ... सा ŚivLī. 18. 5; किमुक्तिभिः स प्रणवोऽपि यत्पुरः प्रतीयतेऽथर्वशिरस्यनेकधा Gaṅgāva. ... अनेकधा। ... आलक्षितं मृगाक्षीभिः ...। अभ्यासिञ्चन्महाराजं

शम्भुराजम् ... समस्तास्ते ParamāKā. 43.26; शिल्पिनः ... हरिन्मणिदलैराच्छादितमनेकधा। ... मण्डपं रचयामासुः ParamāKā. 157.29; 179.43; अनेकधास्त्रैर्युद्धं विदधाति KathāK. 142.5; एकस्याप्यनुगुणने कृतोद्यमस्य स्वाध्यायध्वनितमनेकधा विभाति AmṛUda.3.13; कवाटपुटं विघटयितुमनेकधात्मानमायास्य ... अशक्यविघटनमवधारयन्नचिन्तयम् Mukundā. 185 (15); **2B** in more than one way एक एव परमेश्वरः ... मायया मायाविवत्, अनेकधा विभाव्यते BrahmSūBh. (Śan.) 178. 19 (*on* i. 3. 19); SarvaSiSaṁ. 1. 1; ब्रह्म ... एकधानेकधा मूढैः कल्प्यते रज्जुसर्पवत् BṛĀraUBhVā. ii. 1. 84; दग्धं यदा मदनमेकमनेकधा ते मुग्धः कटाक्षविधिरङ्कुरयांचकार DevīPañ. 4. 7; एक एव हि भूतात्मा देहे देहे व्यवस्थितः। एकधानेकधा चापि दृश्यते जलचन्द्रवत् YaśasCam. ii. 273.9; शक्तिः। स्वस्वातन्त्र्योल्लासस्पन्दादेकाप्यनेकधा वितता PratyabhiHṛ. (Adyar Ed.) 197. 24; एकमेव सदनेकधा ... पश्यति ŚāstrDī. 110. 4 (*on* i. 1. 5); एकधानेकधा च स्युः कामरूपा दिवौकसः TriṣaŚaPuC. ii. 2. 338; एकस्यानेकधा कल्पनमुल्लेखः AlaṅkāRa. 34; एकोऽप्यनेकधा वल्गन्नात्मा नैयायिकैरिव PārthPa. 48; तद्धितशब्दैर्यथा ... सर्वथा सर्वदा धीमान् बहुधानेकधा कथम् KāvyKaVṛ. 6.22 (1.2); अनङ्गरतिर्भैरीमवादयत्। एकोऽप्यनेकधा तस्याः सैनिकैः शुश्रुवे रवः SamarāSaṁ. 5. 433; यथा वेण्यां (वेणीसंहारे) भीमः अनेकधा दुर्योधननिकारपरंपरां दर्शयन् प्रयोजनस्य कुरुकुलक्षयस्यानुबन्धं दर्शयति NāṭaLaRaK. 171; इदं निरवयवं मालया। एकस्यानेकधा निरूपणात् Ekāva. 8. 6 (22) (214. 3); एकमनेकैरनेकधा यत्र। उल्लिख्यते स धीरैरुल्लेखः कथ्यतेऽन्वर्थः Ekāva. 8. 10 (226.13); एकमनेकधा परिणमतीति कल्पना विवर्तवादस्य प्राग्रूपम् NyāySiA. 190. 23; निमित्तभेदादेकस्य वस्तुनो यदनेकधा। उल्लेखनमनेकेन तमुल्लेखं प्रचक्षते CitraMī. 66.2; एकं वस्तु ... अनेकधोल्लिख्यते तत्रोल्लेखः Kuval. 22(2); यद्येकेनैव एव विषयभेदाद्बहुधानेकधोल्लिख्यते AlaṅkāMañ. 25. 21; **3A** into many parts or pieces सोऽनेकधापतद्भूमौ भारद्वाजस्य सायकः MahāBhā. viii. 45. 15; शीर्येतानेकधा क्षितिः MahāBhā. viii. 63. 76; द्रष्टास्यद्य शरैः कर्णं रणे कृत्तमनेकधा MahāBhā. viii. 63. 80; चिच्छेद रामः संक्रुद्धः (v.l. चिच्छेदानेकधा रामः)... ध्वजम् Rāmā. iii. 27. 20; यथा हि नृभ्यां करपत्रमीरितं समुच्छ्रितं दारु भिनत्त्यनेकधा Saund. 9. 32; त एत ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा BhāgP. i. 4. 23; कुर्वन्तं स वियदनेकधा शिरोभिः माहात्म्यान्मनसि तमेक्ष्य मन्यते स्म ĀnandRa. 2. 45; **3Bi** of or into many kinds, types or forms, manifoldly, in manifold or various ways (mostly without predicate) रूपादिभिः स्तुतिः प्रोक्ता आशीः स्वर्गादिभिस्तथा। यानि वाक्यान्यतोऽन्यानि तान्यपि स्युरनेकधा BṛDe. 1. 47; (नाडीच्छेदात्) गतयोऽन्योन्यसंबद्धा बाह्याश्छेद्यास्त्वनेकधा SuśruS. iv. 8. 6; शारीरः ... भिद्यते (तापः) ... गुल्मार्शःश्वयथुश्वासच्छर्द्यादिभिरनेकधा ViṣṇuP. vi. 5. 3; शङ्कुयष्टिधनुश्चक्रैश्छायायन्त्रैरनेकधा। ... विज्ञेयं कालज्ञानमतन्द्रितैः SūrySi. 13. 20; यस्य चेयमनेकधा VākyaPa. 1. 4; प्रतिपत्तिरनेकधा VākyaPa. 2. 136; एवमभावोऽनेकधा SāṁkhyaKāBh. 4. 19 (*on* 4); दृष्टस्त्वनेकधा धातः श्राद्धकल्पः सविस्तरः PrajāSm. 1. 4; अनुपलब्धिरनेकधा PramāVār. 1. 32; विग्रहः स्थाणुभेदाद्य द्विधा भिन्नोऽप्यनेकधा MālinīT. 12. 12; वायुः ... अपकर्षक इत्युक्तो द्वावप्येतावनेकधा MālinīT. 17. 10; सिद्धः पक्षाभासोऽस्ति लिङ्गतः। लोकस्ववचनाभ्यां च बाधितोऽनेकधा मतः Nyāyāva. 21; क्षितौ शुक्लाद्यनेकधा। रूपम् MṛgendraT. i. 12. 28; अदृष्टतत्त्वो लोकस्तु विरोधमभिमन्यते। कार्यकारणभावेऽपि प्रथमोक्तेष्वनेकधा TattvSaṁ. 442; ज्ञानाकारनिषेधस्तु स्ववेद्यत्वान्न शक्यते। विद्यते हि निरालम्बमारोपकमनेकधा TattvSaṁ. 1181; स्वदेशमेव गृह्णाति सवितारमनेकधा TattvSaṁ. 2217; ŚlokaVār. 6. 181 (775. 6); प्रतिभानेकधा पुंसां यद्यप्यर्थेषु जायते ŚlokaVār. 7. 325 (938.2); लोके हि नैमित्तिकानां कार्याणां निमित्तभेदोऽनेकधा विकल्प्यते BṛĀraUBh. 84. 1 (*on* i. 4. 2); (लाटानुप्रासः) भिद्यतेऽनेकधा भेदैः पादाभ्यासक्रमेण च KāvyālanSāSaṁ. 1. 10; रूपादिज्ञानसंभूतौ तद्धेतूनामनेकधा। विकल्पो दृश्यते लोके BṛĀraUBhVā. i. 4. 84; भेदादधिकृतेरेषामग्न्यादीनामनेकधा BṛĀraUBhVā. i. 4. 126; तत्त्वमनेकधा जनितविस्मयो बहु प्रष्टव्योऽसि NalaCam. 4. 9 (9); एवमादिविमूढानां ज्ञेयं मूढमनेकधा YaśasCam. ii. 282. 13; ज्ञानमेकं पुनर्द्वेधा पञ्चधा चापि तद्भवेत्। अन्यत्र केवलज्ञानात्तत्प्रत्येकमनेकधा YaśasCam. ii. 326. 2; एवं संयोगभेदेन गजजातिरनेकधा YuktiKa. 200. 13; गुणजातिप्रभेदेन शुनां भेदो ह्यनेकधा YuktiKa. 213. 4; यानं स्याद्द्विपदं नाम तस्य भेदो ह्यनेकधा YuktiKa. 216.3; ज्योतिःशास्त्रं प्रदीपं हि जन्मत्रयप्रकाशकम्। श्रीमतां तत्तु विदितं कृतं चानेकधा हि तत् ĀdiP. 21. 90; शक्तिः ... अनेकधा लोके या स्थिता लोकपावनी BrahmP. 71. 22; काश्यपी सृष्टिः प्रवृत्ता चातिविस्तरा। मनुष्यपशुसर्पादिजातिभेदैरनेकधा DevīBhāP. iii. 13. 14; शक्तिस्ते सहचारिणी। ... वाराही नारसिंही च नानाभेदैरनेकधा DevīBhāP. iii. 13. 46; व्यलोकयंस्तं नगरे तस्मिन्सर्वे महाजनाः। विधाय पूजासामग्रीं भोजनस्याप्यनेकधा GaṇeP. ii. 24. 1; स्वप्नश्चानेकधान्यार्थो यथार्थोऽपार्थ एव च KathāSaSāg. viii. 3. 147; तमङ्गभद्रविन्यासरचनाभिरनेकधा ... गृहभेदाः प्रसूयन्ते SamarāSū. 19. 39; भक्तिर्ह्यनेकधा TriṣaŚaPuC. i. 2. 555; संसारवासजं दुःखं विचार्य तदनेकधा। सर्वात्मनापि मोक्षाय यतध्वं हे विवेकिनः TriṣaŚaPuC. i. 3. 567; (भाषा) सा तु वर्णैरनेकधा AbhidhāCin. 1266; (अश्वस्य) मिश्रास्त्वनेकधा वर्णाः Mānaso. iv. 4. 682; प्राकृतं तज्जतत्तुल्यं देश्यादिकमनेकधा Vāgbhaṭā. 2. 2; पाटीसूत्रोपमं बीजं गूढमित्यवभासते। नास्ति गूढममूढानां नैव षोढेत्यनेकधा Līlā. 61 (11); (संदेहः) अनेकधोक्तस्तथापि AlaṅkāRa. 30 (3); शृङ्गाश्चैवमनेकधा Rasā. 6. 67; मार्गभेदाच्चिरक्षिप्रमध्यभावैरनेकधा SaṁgīRa. iii. 24. 6 (5. 45); पाठास्ते स्युरनेकधा SaṁgīRa. iii. 395. 2 (6. 823); बभूव पक्वान्नमनेकधा VasaViKā. 13. 66; वः ... यौगपद्येष्वनेकधा MugdhaBo. 6. 58 (61. 3); स्तोकोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकधा PratāYaBhū. 106. 5; याता मालेत्यनेकधा। प्रतियोगिधिया योषिद् भिद्यते न स्वरूपतः PañcDa. 4. 23; BhaktiRa. 1. 25; शब्दादीनाम् ... अनेकधैकैकार्थप्रतीतिजनकत्वात् TattvPrakā. 183B. 5 (*on* iii. 3. 60); अद्रव्यमनेकधा NyāyPari. 7.1; छेको व्यञ्जनसंघस्य सकृत्साम्यमनेकधा SāhiDa. 475. 1; वैशिष्ट्येन च देशादेरर्थमूलमनेकधा UjjvaNīMa. 185. 13; अनेकधा वाक्यार्थस्फुरणेनानेकधा वाक्यार्थज्ञानोदये सति ŚivārkaMaDī. i. 57. 28 (*on* i. 1. 1); i. 60. 19 (*on* i. 1.1); शारीरदण्डवद्यार्थदण्डोऽप्युत्तममसाहसादिभेदेनानेकधेति तदुपयोगिकृष्णलादिनिरूपणम् VīraMi. (Rājanīti.) 294.1; (उपमा) उक्तधर्मा तावदनुगाम्यादिभिः प्रागुक्तैर्धर्मैरनेकधा RasGaṅ. 263. 5; शून्यं रामेषवः ...। व्यासेन तत्कृतिर्यत्र फलमेवमनेकधा SiddhāTaVi. 81. 14; (दण्डः) द्विविधोऽप्यपराधानुसारेणानेकधा भवति BālamBha. ii. 37. 13 (*on* 2. 26); विद्यमानेषु मनसि कार्यजातेष्वनेकधा। तदौपाद्रिकमित्याहुः प्रधानं यन्मनीषिणाम् SāhiSā. 3. 36; **3Bii** of or into more than one kind or form किं पुनस्तदेकमनेकधा भिन्नं करणमिति AitUBh. 289.6 (*on* 5.2); एकमेव ज्ञानं नामरूपाद्यनेकोपाधिभेदात् ... अनेकधावभासते PraśnaUBh. 294. 8 (*on* 6.2); निर्भयोऽपि स्वतो विद्वानेकं सन्तमनेकधा। प्रकल्प्य ... भयमाप्नुयात् TaiUBhāVā. 135. 9 (2); नेत्रप्रवृत्तिभेदादेकस्यापि चन्द्रादेरनेकधा दर्शनम् YuktiSneha. 139. 30 (*on* i. 1. 6); **4** the word *anekadhā* नञा समासेऽनेकधेत्येव स्यात् LaŚabdeŚe. ii. 53. 15.

**अनेकधाकृतरक्ष** (anekadhā-kṛtarakṣa) *adj.* protected many times क्षपाचरैरनेकधाकृतरक्षोऽपि प्रसह्य मारुतिना भुजबलेन भग्नोऽक्षः TilaMañ. 135. 22.

**अनेकधाकृति** (anekadhākṛti) *adj.* of many kinds or forms काशिराजोऽन्वपृच्छत। मायया मुनिपुत्रस्य मोहितोऽनेकधाकृतेः GaṇeP. ii. 24. 24.

**अनेकधाग्रहण** (anekadhā-grahaṇa) *n.* assumption in various ways तत्र विषये भ्रान्तिमदलङ्कारोऽस्तु। अतद्रूपस्य तद्रूपताप्रतीतिनिबन्धनत्वात्। नैतत्। अनेकधाग्रहणाख्यस्यापूर्वस्यातिशयस्याभावात् AlaṅkāSa. 48. 4; सादृश्यदर्शनस्य प्रकृतविषयत्व इवाप्रकृतविषयत्वेऽपि स्मृतिरूपकसंदेहभ्रान्त्यनेकधाग्रहणापह्नवसंभावनासंभवद्वस्तुसंबन्धनिबन्धननिर्दिष्टसमर्थनादीनामिवालङ्कारान्तरत्वायोगात् CitraMī. 15. 14.

**अनेकधातु** (aneka-dhātu) *m.* **1A** many (kinds of) metals अनेकधातुकलिलौ सर्वधातुविभूषितौ। ... द्वावप्येतौ सुमहतावुच्छ्रितौ कुलपर्वतौ VāyuP. i. 45. 23; कथमहमिदानीमनेकवावदूकवादिवृषभविघट्टनोपार्जितामनेकधातुशतघ्निं(?घ्नीं) वाचमुत्सृज्य स्त्रीशरीरमिव माधुर्यकोमलां करिष्यामि PadmPrā. 9. 6; **1B** many (kinds of) minerals चित्राभिरस्योपरि मौलिभाजां भाभिर्मणीनामनणीयसीभिः। अनेकधातुच्छुरिताश्मराशेर्गोवर्धनस्याकृतिरन्वकारि ŚiśuVa. 3.4; SūktiSu. 38; अनेकधातुमद्भूमिधृतसंध्याभ्रविभ्रमम्।... स तं हिमाद्रिमद्राक्षीत् PariPar. 12. 364; **2** many verbal roots or stems पिकादिशब्दानां निरुक्तादिवशेनापि अवयवार्थान्वाख्यानं पिबति पाति पचतीत्यनेकधातुसाधारणत्वान्म्लेच्छप्रसिद्ध्यनुगुणमेव MīmāKau. i. 84. 11 (*on* i. 3. 11); निवृत्तभेदानां प्रतीत्यानेकधातुप्रयोगाप्रसक्तेः LaŚabdeŚe. i. 184. 3.

**अनेकधातु** (aneka-dhātu) *adj.* having many constituent parts उपसर्गाः क्रियायोगे रूपसिद्धेरुपाश्रिताः। राज्ञां नानेकधातूनां क्रोधेऽभूवन्निरर्थकाः Kapphiṇā. 18.54.

**अनेकधातुव्यसन** (aneka-dhātuvyasana) *n.* many sufferings caused by bodily humours दशा शनेर्नष्टबलस्य पुंसामनेकधातुव्यसनानि दत्ते TājiNī. 2(6). 42 (285)

**अनेकधात्व** (anekadhā-tva) *n.* the state of being of various ways ग्रहीतृभेदाख्येन विषयविभागेनानेकधात्वोट्टङ्कनात्तस्य च विच्छित्यन्तररूपत्वात् AlaṅkāSa. 48. 6; पूर्वत्र ग्रहीतृभेदेनानेकधात्वोल्लेखः AlaṅkāSa. 49.2.

**अनेकधादर्शन** (anekadhā-darśana) *n.* seeing or observing in various ways अनेकरसं ब्रह्म ... उपदिश्यते ... अनेकधादर्शनापवादाच्च 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति BṛĀraUBh. 690. 3 (*on* v. 1. 1)

**अनेकधान्य** (aneka-dhānya) *n.* many (kinds of food-) grains आज्ञाकाङ्क्षाविषयविमुखश्चेदितोऽनेकधान्यै(?)र्जीवत्युर्व्यां यदि परमसौ लङ्घनाभ्यासवृत्त्या KumāDePra. 112 (15). 31.

**अनेकधान्योच्चय** (anekadhānyoccaya) *m.* gathering of many (kinds of food-) grains मञ्जयात्मकोऽनेकधान्योच्चयः शिलः DīpKa. 17.17 (*on* 1. 128)

**अनेकधाप्रयोग** (anekadhā-prayoga) *m.* employment or using repeatedly or many times संभ्रमेण प्रवृत्तौ यथेष्टमनेकधाप्रयोगो न्यायसिद्धः SiddhāKau. 329A.2 (*on* viii. 1. 12)

**अनेकधाबद्धपरिदेवन** (anekadhābaddha-paridevana) *n.* lamentation (which is) made, i.e. uttered many times अनेकधाबद्धपरिदेवनविक्लवाम्। सान्त्वयामास कंसारिरिति द्रुपदनन्दिनीम् PāṇḍaC. 13. 1025.

**अनेकधाभवन** (anekadhā-bhavana)*n.* becoming manifold or of many kinds अनेकधाभवनं च शरीरसापेक्षम् ŚrutaPra. ii. 644. 18 (*on* iv. 4. 10)

**अनेकधाभाव** (anekadhā-bhāva) *m.* i becoming of many kinds or forms 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधाभावस्याधिगतत्वात् BrahmSūBh.(Śaṅ.)415.16(*on* ii.2.42);न हि मनोमात्रभेदे स्फुटतरोऽनेकधाभावो यथा शरीरेन्द्रियभेदे Bhām.758.17(*on* iv.4.11);अनेकधाभावगमनानुपपत्त्या सर्वेषां सात्मकत्वं कल्प्यते PrakaVi. 1103. 17; निर्गुणायां भूमविद्यायाम् अयमनेकधाभावः पठ्यते VedāntKa. 552. 23 (*on* iv. 4. 10); ii becoming of more than one kind or form आत्मन एकस्याच्छेद्यस्यानेकधाभावासंभवात् त्रिधाभावादयः शरीरनिबन्धना इत्यवगम्यते BrahmSūBh. (Rā.) 767.1 (*on* iv. 4. 11)

**अनेकधाभावविकल्प** (anekadhābhāva-vikalpa) *m.* option of becoming of many kinds 'स एकधा भवति त्रिधा भवति' इत्यादिना अनेकधाभावविकल्पमामनन्ति BrahmSūBh. (Śaṅ.) 855.3 (*on* iv. 4. 11)

**अनेकधाभावोपपत्ति** (anekadhābhāvopapatti) *f.* tenability of becoming of many kinds मनोभेदादनेकधाभावोपपत्तेर्नानेकशरीरप्राप्तिः VedāntKa. 552.19 (*on* iv. 4. 10)

**अनेकधाभिन्न** (anekadhā-bhinna) *adj.* 1 divided into many kinds अनेकधाभिन्नस्यानुमानस्य त्रिविधेन पूर्ववदादिना संग्रहः NyāyVār. 51. 19 (*on* i. 1. 5); 63. 22 (*on* i.1.8); 2 distinct in various ways अनेकधाभिन्नप्रपञ्चस्योदाहरणार्थं सूत्रम् NyāyVār. 251.9 (*on* ii. 2. 7)

**अनेकधाभिन्नस्रोतस्** (anekadhābhinna-srotas) *adj.* 1 having the streams divided in various ways (राजा) अनेकधाभिन्नस्रोतसम् ... विन्ध्याटवीमवगाहमानः ... प्रयाणविच्छेदमकरोत् NalaCam. 6.11 (21); 2 having sacred traditions divided into many kinds, NalaCam. 6.11 (21) (comm. बह्वाम्नायम्)

**अनेकधाभूत** (anekadhā-bhūta) *adj.* (horse) which has become of many kinds अश्वैरनेकधाभूतरेवन्ताश्वभ्रमप्रदैः। ... प्रचचाल महीपालः TriṣaŚaPuC. i. 4. 37.

**अनेकधामन्** (aneka-dhāman) *adj.* having numerous splendours or lustres विस्तारिचक्रमिव राशिमयं बिभर्ति योऽनेकधामकरकुम्भकरालशोभाम् HarVi. 31. 33.

**अनेकधामन्** (aneka-dhāman) *n.* many places यत्नीत्यर्थमनेकधामनि मया कष्टेन वस्तु प्रियं स्वस्याशाकवलीकृतेन विकलीभावं दधानेन मे। तत्सर्वं विलयं निनाय भगवान् VijñāŚ. 98.

**अनेकधामाश्रय** (anekadhā-māśraya) *m.* 1 shelter of Lakṣmi in various ways तस्यामासीत् ... रविरिवानेकधामाश्रयः ... राजा ... नलो नाम NalaCam. 1. 33 (4) (comm. अनेकधा सप्ताङ्गत्वाद् बहुधा माया लक्ष्म्या आश्रयः); 2 (anekadhāmāśraya) shelter of (one who has) many rays, NalaCam. 1. 33 (4) (comm. प्रचुरस्य धाम्न आश्रयः)

**अनेकधारा** (aneka-dhārā) *f.* more than one edge, i.e. two edges तैः ... ध्रियन्तेऽनेकधारयातिपातिनः खड्गाः खड्गिनश्च NalaCam. 1.47 (21) (comm. खड्गा द्विधारत्वादनेकया धारया)

**अनेकधारूपधामन्** (anekadhārūpa-dhāman) *n.* abode of many forms स परिधामनेकधारूपधामभिरंशुकैर्व्यधात् VasaViKā. 10. 77.

**अनेकधी** (aneka-dhī) *f.* many mental functions अनेकधियामसौ। संधिं धियामभावं च भासयन्नविविच्यताम् PañcDa. 8. 3 (comm. अनेकधियामनेकासां बुद्धिवृत्तीनाम्)

**अनेकधूपद्रव्य** (anekadhūpa-dravya) *n.* materials for various (types of) incense अनेकधूपद्रव्यं च ... शर्वधूपाय शस्यते PadmP. iv. 110. 335.

**अनेकधृत्** (aneka-dhṛt) *m.* epithet of Śiva (*lit.* who supports many) हरस्य ...। अष्टोत्तरसहस्रं तु नाम्नाम् ... संप्रवक्ष्यामि ...। ईशान ईश्वरचाग निशाचरी ह्यनेकधृत् CaturCin. i. 206. 1.

**अनेकधृष्** (aneka-dhṛṣ) *m.* epithet of Śiva (*lit.* who overpowers many) श्रुतिप्रकाशः श्रुतिमानेकबन्धुरनेकधृक्। ... एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम् LiṅgaP. i. 98. 146; ŚivaP. iv. 35. 118 (393 B. 7)

**अनेकधोल्लेख** (anekadhollekha) *m.* A description in more than one way यत्रैकस्यानेकधोल्लेखः क्रियते तत्रोल्लेखालंकारः Ekāva. 8. 10 (9) (227.9), B description in various ways 'गाम्भीर्येण समुद्रोऽसि ....' इत्यादौ चानेकधोल्लेखे गाम्भीर्यादिविषयभेदः प्रयोजकः SāhiDa. 535.12.

**अनेकधोल्लेखन** (anekadhollekhana) *n.* description in various ways अनेकधोल्लेखनं निषेधास्पृष्टत्वेन RasGaṅ. 360. 9.

**अनेकधोल्लेखनिमित्त** (anekadhollekha-nimitta) *n.* cause of the description in various ways अनेकधोल्लेखनिमित्तं त्वनेकधर्मसंबन्धः Ekāva. 8.10 (9) (227.9)

**अनेकधोल्लेखलक्षण** (anekadhollekha-lakṣaṇa) *adj.* characterized by the description in various ways अतद्रूपस्य तद्रूपताप्रतिभासेऽप्यनेकधोल्लेखलक्षणं विच्छित्त्यन्तरमुररीकृत्यास्य प्रवर्तमानत्वात् Ekāva. 8.10(3) (227.3)

**अनेकध्यानादि** (anekadhyānādi) *adj.* many contemplations or recollections etc. अनेकध्यानादिस्मरणोपायप्रसङ्गे वाक्यनियमात् TantrVā. 54.6 (*on* i. 2.32)

**अनेकध्वजसंकुल** (anekadhvaja-saṅkula) *adj.* crowded with many flags त्रिदण्डतूणसंबाधमनेकध्वजसंकुलम्। ... नगरं ते मया गुप्तं रथोपस्थं भविष्यति MahāBhā. iv. 40. 5.

**अनेकध्वजस्तम्भ** (aneka-dhvajastambha) *m.* many flag-poles अनेकध्वजस्तम्भस्तम्भिकोत्तम्भितमणिमुकुरमुखावलोकनकेलिकलदिवौकःस्खलितरथविमानवाहनसंबाधानुबन्धिभिः ... चैत्यालयैः ... उपशोभितं राजपुरं नाम नगरम् YaśasCam. i.18. 4 (comm. बहुला ये ध्वजस्तम्भाः)

**अनेकनक्रग्रहमीनजुष्ट** (anekanakragrahamīna-juṣṭa) *adj.* resorted to by a number of crocodiles, sharks and fishes उत्तिष्ठतस्तस्य महासुरस्य समुद्रतोयं ववृधेऽतिमात्रम्। अनेकनक्रग्रहमीनजुष्टम् VarāP. 96. 7.

**अनेकनक्रग्रहमीनयुक्त** (anekanakragrahamīna-yukta) *adj.* containing many crocodiles, sharks and fishes उत्तिष्ठतस्तस्य महासुरस्य समुद्रतोयं ववृधे तु वेगात्। अनेकनक्रग्रहमीनयुक्तम् PadmP. v. 26. 65.

**अनेकनक्षत्र** (aneka-nakṣatra) *adj.* consisting of more than one constellation श्राद्धमस्मै दद्युः। ... अयुग्मासु तिथिषु ... एकनक्षत्रे एकतारके नक्षत्रेऽश्विन्यादिनक्षत्रेषु बहून्यनेकनक्षत्राणि HārLa. 184. 11.

**अनेकनक्षत्रमालालंकृत** (anekanakṣatramālālaṅkṛta) *adj.* A (night) decorated, i.e. decked with many rows of constellations (चन्द्रापीडः) निशासमयमिवानेकनक्षत्रमालालंकृतम् ... राजकुलं विवेश Kād. 91. 4; B (palace) adorned with many necklaces (of twenty-seven pearls each), Kād. 91. 4.

**अनेकनगरग्राम** (aneka-nagaragrāma) *m.* number of cities and towns कुमारः ...। अनेकनगरग्रामान् समुल्लङ्घ्य ... वने प्राप्तो मनोरमे CitraPaC.244.

**अनेकनटगन्धर्व** (aneka-naṭagandharva) *m.* many actors and singers अनेकनटगन्धर्वा गायन्तो यश उज्ज्वलम्। अनुजग्मुर्महीशानम् PadmP. iv. 68.14.

**अनेकनदीकाननपर्वत** (aneka-nadīkānanaparvata) *m.* several rivers, forests and mountains स नृपात्मजः। ... गच्छंश्च नभसानेकनदीकाननपर्वतान्। प्रेक्षमाणो भुवि प्राप PārśvC. 2. 262.

**अनेकनमसित** (aneka-namasita) *n.* many salutations जन्युरनयोरनेकनमसितपर्वतप्राप्तः पर्वतो नाम YaśasCam. ii. 353. 8.

**अनेकनयनाकीर्ण** (anekanayanākīrṇa) *adj.* possessed of many eyes ध्यायेत् ... देवम् ...। अनेकनयनाकीर्णं सूर्यकोटिसमप्रभम् TriBrU. 154.

**अनेकनर** (aneka-nara) *m.* i more than one person एकस्य वेद्यस्यानेकत्र धीर्युगपदित्येवं रविदृष्टान्तः रवावनेकनराणाम् शब्दे त्वेकस्येति भेदोऽस्तु NayaVi. 241.7 (*on* i. 1.8); ii many people वेश्याचित्तमिवानेकनरसंहारदारुणम्। श्मशानं तत्र दृष्ट्वासौ न चकम्पे BṛKathāMañ. iii. 1. 213.

**अनेकनरक** (aneka-naraka) *m., n.* A many hells क्रूरान् संसारेषु एव अनेकनरकसंसरणमार्गेषु नराधमान् अधर्मदोषवत्त्वात् क्षिपामि GītāBh. (Śaṅ.) 462. 13 (*on* 16. 19); B various hells रौरवे नरके घोरे कुंभीपाके च ये गताः। अनेकनरकस्थाः ...। सकृत्पिण्डप्रदानेन स्यात्तेषामक्षया गतिः SkandP. iii(2).27.18.

**अनेकनरनारी** (aneka-naranārī) *f.* several men and women रामः ...। अनेकनरनारीभिः संकीर्णं मार्गमाचरत् PadmP. iv. 68. 18.

**अनेकनरपतिसंचरणचला** (anekanarapatisañcaraṇa-calā) *adj.* (*f.*) A unsteady due to the movements of several kings राज्यवर्धनहर्षौ ... अनेकनरपतिसंचरणचलां निश्चलीकुर्वाणमिवोर्वीम् ... माधवगुप्तं ददृशतुः HarṣaC. 196.8; B trembling with the movements of several kings, HarṣaC. 196. 8.

**अनेकनरेन्द्रपरिवृत** (anekanarendra-parivṛta) *adj.* 1 (sovereign) surrounded by several kings पुरुषातिशयेनेवानेकमण्डलकृतसेवेन (Add ... चक्रवर्तिनेव अनेकनरेन्द्रपरिवृतेन VVP. Ed. 312.6) श्मशानवाटेन गत्वा VāsaDa. 243. 3 (comm. नरेन्द्राः ... राजानश्च); 2 (crematorium) pervaded by a number of poison-doctors or sorcerers, VāsaDa. 243. 3 (comm. नरेन्द्राः विषवैद्याः ... नरेन्द्राः मान्त्रिकाः इति केचित्)

**अनेकनरेन्द्रवृन्द** (anekanarendra-vṛnda) *n.* host of numerous kings अस्ति ... अनेकनरेन्द्रवृन्दमरीचिजालजटिलीकृतपादपीठः ... नन्दो नाम राजा Pañcā. 246.16.

**अनेकनरेन्द्रसेवित** (anekanarendra-sevita) *adj.* served or attended upon by numerous kings तस्यानेकनरेन्द्रसेवितपदद्वन्द्वस्य ... रत्नम् ... कन्यकाख्यम् ParamāKā. 153. 49.

**अनेकनर्तकीयोज्य** (anekanartakī-yojya) *adj.* to be performed or enacted by a number of female dancers अनेकनर्तकीयोज्यं चित्रताललयान्वितम्। ... रासकम् BhāvPra. (Śā.) 266. 13 (9)

**अनेकनलदर्शन** (anekanala-darśana) *n.* sight of several Nalas गुम्फो गिरां शमननैषधयोः समानः शङ्कामनेकनलदर्शनजातशङ्के। चित्ते विदर्भवसुधाधिपतेः सुताया यन्निर्ममे खलु तदेष पिपेष पिष्टम् NaiṣC. 13. 20.

**अनेकनलावलम्बा** (anekanalāvalambā) *adj. (f.)* dependant on, i.e. referring to several Nalas शङ्कालताततिमनेकनलावलम्बां वाणी न वर्धयतु NaiṣC. 13. 26.

**अनेकनवपाकशालिन्** (anekanavapāka-śālin) *adj.* posessing various new ripenesses अहम् ... प्रगुणितैरनेकनवपाकशालिभिः फलैराहारमकार्षम् UdaySuKa. 135. 2.

**अनेकनवशर** (aneka-navaśara) *m.* various new arrows कुसुमसायकमिवानेकनवशरग्रहणाय प्रविष्टम् ... राजानमद्राक्षीत् UdaySuKa. 50. 1.

**अनेकनाककामिनी** (aneka-nākakāminī) *f.* several celestial beautiful ladies अनेकनाककामिनीकुचकुम्भकुङ्कुममञ्जरीमुद्राङ्कितविपुलवक्षःस्थलीदृश्यमानमहानीलमणिमण्डननिभभव्यवृत्रशस्त्रव्रणः ... पुरंदरः NalaCam. 5. 52 (5)

**अनेकनाकनायक** (aneka-nākanāyaka) *m.* several leaders or chiefs in the heaven (सरस्वती) अनेकनाकनायकनिकायकामिनीकुचकलशलुलितविग्रहाम् ... मन्दाकिनीमनुसरन्ती मर्त्यलोकमवततार HarṣaC. 30. 3.

**अनेकनाकनायकनारी** (aneka-nākanāyakanārī) *f.* several wives of the leaders or chiefs in heaven प्रसाधिकाभिर्भवानीमिवानेकनाकनायकनारीभिराराध्यमानाम् ... दमयन्तीमद्राक्षम् NalaCam. 7. 19 (22)

**अनेकनाकिनायकनारी** (aneka-nākināyakanārī) *f.* several wives of the leaders or chiefs of gods प्रसाधिकाभिर्भवानीमिवानेकनाक (v.l.°कि) नायकनारीभिराराध्यमानाम् ... दमयन्तीमद्राक्षम् NalaCam. 7. 19 (22)

**अनेकनाकिनिकुरम्ब** (anekanāki- nikuramba) *n.* mass or multitude of several gods सोऽनेकनाकिनिकुरम्बपुरन्ध्रिलोकवक्त्राब्जहासघटनारविबिम्बचक्रः। ... हरिः ... दितिजान् जघान HarVi. 10. 34.

**अनेकनाकुनिर्गत** (anekanāku-nirgata) *adj.* coming out from many ant-hills (वनम्) क्वचिदनेकनाकुनिर्गतनिर्मोकालोकनकुपितकलापिनीपोतखरनखरमुखावलिख्यमानमेदिनीवदनम् YaśasCam. ii. 198. 4. (comm. नाकवो वल्मीकानि)

**अनेकनाग** (aneka-nāga) *m.* A many serpents भीमादनेकनागायुतबलम् ... हर्षमद्राक्षीत् HarṣaC. 119.5; अनेकनागराजादनजनितशोभैः केसरिभिः प्रकृष्टकुटजैः ... उपवनैरशून्यपश्चिमभूमिकाभागम् ... तिलकमञ्जरीमन्दिरमपश्यम् TilaMañ. 370. 19; B many elephants, HarṣaC. 119.5; C many *nāga*-trees, TilaMañ. 370.19.

**अनेकनागनायक** (aneka-nāganāyaka) *m.* several lords of serpents रक्षोगणाः ...रसातलमिवानेकनागनायकभीषणम्। ... पश्यन्तो विस्मयापूर्णाः समुद्रं विविधाद्भुतम्। अनुजग्मुः PadmP. (Ra.) 8. 509.

**अनेकनागाङ्गना** (aneka-nāgāṅganā) *f.* many female serpents बहुगुण-[भागविस्तार-]वाहिभि[रनेकनागाङ्गनागमजनितर्द्धिभिः, प्रशस्ततक्षकादि]घटितैर्भुजगराजैरिव भोगवतीमहापथैरुपशोभिता ... काञ्चीपुरं नाम राजधानी AvantiKa. 4. 14.

**अनेकनाडीछिद्र** (aneka-nāḍīchidra) *n.* numerous openings of the nerves or veins यदेतदन्तर्हृदये जालकमिव अनेकनाडीछिद्रबहुलत्वात् जालकमिव BṛĀraUBh. 509. 3 (*on* iv. 2. 3)

**अनेकनाडीसुषिर** (anekanāḍī-suṣira) *adj.* having several nerves or veins as the bases of channels or cavities हृदयमिति पुण्डरीकाकारो मांसपिण्डः प्राणायतनोऽनेकनाडीसुषिरः TaiUBh. 204. 1 (*on* 1. 6)

**अनेकनानात्वाभिप्राय** (anekanānātvābhiprāya) *adj.* intended to convey several diversities किंचनशब्दस्तु गुणगुण्यवयवावयवित्वादिप्रयुक्तानेकनानात्वाभिप्रायः Nyāyāmṛ. 273A. 8.

**अनेकनानामृगपक्षिन्** (aneka-nānāmṛgapakṣin) *m.* many varieties of beasts and birds अनेकनानामृगपक्षिसंकुले ...। वनोत्तमे ... तदा विजहुः सुसुखं जितेन्द्रियाः Rāmā. ii. 50. 21.

**अनेकनानाविधपक्षिन्** (anekanānāvidha-pakṣin) *m.* several varieties of birds अनेकनानाविधपक्षिनादिते ...। नगोत्तमे ... तुतोष रामः Rāmā. ii.1214* (1)

**अनेकनानाविधविषय** (anekanānāvidha-viṣaya) *m.* several varieties of topics अनेकनानाविधविषयविद्यास्थानोपबृंहितस्य वेदाख्यस्यापि शास्त्रस्य प्रपञ्चान्तःपातित्वात् PañcPā. 82. 2 (*on* i. 1. 3)

**अनेकनानास्त्रधर** (anekanānāstra-dhara) *adj.* holding many different weapons अनेकनानास्त्रधराः प्रवीरा यत्र प्रभोः पश्चिमदिग्विभागे Rāṣṭrau.9.42.

**अनेकनामघटितत्व** (anekanāmaghaṭita-tva) *n.* the state of being what consists of more than one noun धवखदिरपलाशा इत्यत्र ... बहुवचनैनैकप्रमाजनकानेकनामघटितत्वं लक्षणे निवेश्यते LaCandr. 665. 5.

**अनेकनामधेयत्व** (anekanāmadheya-tva) *n.* the state of having more than one name एकस्यापि च दाक्षायणयज्ञादिवद् वक्ष्यमाणेन गुणयोगेनानेकनामधेयत्वसिद्धेः TantrVā. 527. 5 (*on* ii. 2. 22)

**अनेकनामरूप** (aneka-nāmarūpa) *adj.* having various names and forms अनेकनामरूपस्य परतन्त्रस्य कार्यस्यानन्यत्वम् VedāntKau. 160. 7 (*on* ii. 1. 14)

**अनेकनामसंकीर्तन** (anekanāma-saṅkīrtana) *n.* utterance of more than one name एकत्र पिण्डे अनेकनामसंकीर्तनपक्षे तु सर्वेषां त्रय एव पिण्डा इति सिद्धमेव CaturCin. iii(1). 119. 12.

**अनेकनामार्थक** (anekanāmārtha-ka) *adj.* expressive of various names or synonymous words बहुवचनं नानेकनामार्थकम् LaCandr. 665. 17.

**अनेकनायकन्यास** (anekanāyaka-nyāsa) *m.* A employment of number of heroes ऊचे सेनापरिक्षिप्तः सोऽवलिप्तमिदं वचः। अनेकनायकन्यासविकटाङ्गदमङ्गदम् RāmC. 11. 61; B setting, i. e. adorning with a number of central, i.e. big gems, RāmC. 11. 61.

**अनेकनायिकाविषया** (anekanāyikā-viṣayā) *adj. (f.)* referring to more than one heroine एकस्यानेकनायिकाविषया रतिः RasTa. 179. 10.

**अनेकनारीजन** (aneka-nārījana) *m.* many women folk नृपस्य पत्नी ...। अनेकनारीजनबाहुमूलनखक्षतावेक्षणतत्पराभूत् VikraDeC. 10. 50.

**अनेकनारीपरिरम्भ** (anekanārī-parirambha) *m.* act of embracing or hugging of many women अनेकनारीपरिरम्भसंभ्रमस्फुरन्मनोहारिविलासलालसम्। मुरारिमारादुपदर्शयन्त्यसौ सखी ... आह ... राधिकाम् GītGo. i.4.1.

**अनेकनिकटग्राम** (aneka-nikaṭagrāma) *m.* several nearby towns असावनेकनिकटग्रामपरिसरविसारिसारिणिजला सरावती नाम ... सरित् TilaMañ. 181.19.

**अनेकनिकर** (aneka-nikara) *m.* many heaps or groups (अनुचराः) अम्बरचरकुमारास्फाल्यमानानेकनिकरम् ... इतस्ततः ... निचाय्य ... श्रेणिकधरणीश्वरायेदं निवेदया-मासुः YaśasCam. ii. 305. 20.

**अनेकनिग्रहस्थान** (aneka-nigrahasthāna) *n.* many points or causes of defeat (clinchers) अस्य चानेकनिग्रहस्थानसंनिपाते ... न दोषत्वम् NyāyPari. 210.3.

**अनेकनिग्रहस्थानभेद** (aneka-nigrahasthānabheda) *m.* various types of points or causes of defeat (clinchers) निग्रहः पराजयस्तस्य स्थानमाश्रयः कारणमित्यर्थः ... असमासकरणमनेकनिग्रहस्थानभेदावरोधार्थम् NyāyMañ. ii.191.2.

**अनेकनित्यानित्यविशेषण** (aneka-nityānityaviśeṣaṇa) *n.* various attributes such as eternal and non-eternal एकस्य वा शब्दस्य धर्मिणोऽनेकनित्यानित्यविशेषणाभिसंबन्धिनः पुरुषाभिसंधिभेदादनेकशब्दाभिधानम् TātpaṬ. (Vā.) 317. 21 (*on* i. 2. 1)

**अनेकनिधीश्वर** (anekanidhīśvara) *m.* **1** lord of several treasures पुण्यजनाधीशमप्यनेकनिधीश्वरम्। राजराजमपि ख्यातमधीश्वरसुहृत्तया PāṇḍaC. 6. 70; **ii** (aneka-nidhīśvara) more than one Kubera, PāṇḍaC. 6. 70.

**अनेकनिबन्धसिन्धु** (anekanibandha-sindhu) *m.* ocean in the form of numerous compositions (of law) तेनानेकनिबन्धसिन्धुमनिशं निर्मथ्य ... ग्रन्थोऽयं रचितः ViraMi. (Paribhāṣā.) 6. 23.

**अनेकनिमित्त** (aneka-nimitta) *adj.* **A** having more than one cause रूपरसगन्धस्पर्शप्रत्यया एकानेकनिमित्ताः ... ध्वस्तनाद्यतनविज्ञानान्येकसंततौ एकानेकनिमित्तानि NyāyVār. 421.10 (*on* iii. 2. 14); **B** having various causes अयं व्यवहारो न निर्निमित्तः नाप्यनेकनिमित्तः ĀtmaTaVi. 347. 4.

**अनेकनिमित्तक** (anekanimitta-ka) *adj.* **i** having more than one cause रूपरसस्पर्शप्रत्ययाः एकानेकनिमित्तकाः NyāyVār. 70. 14 (*on* i. 1. 10); **ii** having various causes अनेकसत्त्वे त्वनेकनिमित्तकस्यैव तस्य ग्रहणम् LaŚabdeŚe.ii.617.21.

**अनेकनिमित्तत्व** (anekanimitta-tva) *n.* **i** the state of having more than one cause नैष दोषः प्रत्ययद्वैतस्यानेकनिमित्तत्वात् न खलु प्रत्ययद्वैतमेकनिमित्तं दृष्टम् NyāyVār. 239.13 (*on* ii. 1. 31); **ii** the state of having various causes अनित्यः शब्दः ... असर्वगतः शब्दः ... एतदपि प्रतिज्ञाहानिवत्र युक्तम्, तस्याप्यनेक- [illegible] māMi. 67. 3 (*on* ii. 1. 34)

**अनेकनिमित्तप्रतिषेध** (anekanimitta-pratiṣedha) *m.* negation or rejection of various causes or reasons अनेकग्रहणमनेकनिमित्तप्रतिषेधशङ्कानिरासार्थम् TātpaṬ. (Vā.) 216. 25 (*on* i. 1. 10)

**अनेकनिमित्तसंनिपात** (anekanimitta-sannipāta) *m.* assemblage, i.e. concurrence of several causes युक्तमेवानेकनिमित्तसंनिपाते नैमित्तिकसाहित्यम् BhāṭṭDī. ii. 179. 7 (*on* v. 2. 2)

**अनेकनिमित्तसंबन्धिन्** (anekanimitta-sambandhin) *adj.* related to more than one cause यदा पुनरेकमनेकनिमित्तसंबन्धि भवति तदा कथम् NyāyVār. 195. 15 (*on* ii. 1. 15)

**अनेकनिमित्तोपनिपात** (anekanimittopanipāta) *m.* concurrence of more than one cause युगपदनेकनिमित्तोपनिपाते एकेनैव नैमित्तिकेन कृतपादिकालावरोधे द्वितीयस्यानवकाशे ... सति ... तेषाम् ... एकोद्दिष्टमेव CaturCin. iii (1). 217. 19.

**अनेकनियमक्रम** (anekaniyama-krama) *m.* order of many religious rules धरणीश्वराग्रणीः ...। अकरोदनेकनियमक्रमाङ्कितं हरिनामतीर्थविधिमादरान्वितः Raghunā. 4. 34.

**अनेकनियमदर्शन** (anekaniyama-darśana) *n.* observation of several general (inductive) rules अनेकनियमदर्शनविघातप्रसङ्गाच्च तथाभ्युपगमः ĪśvaSi. (Yā.) 30. 2.

**अनेकनियमबाध** (anekaniyama-bādha) *m.* contradiction with or annulment of many grammatical rules प्रथमातिक्रमे कारणाभावादनेकनियमबाधे गौरवाच्च प्रथमैकवचनस्यैवानेनोत्सर्गत्वं बोध्यते LaŚabdeŚe. i. 361. 1.

**अनेकनियमभङ्ग** (anekaniyama-bhaṅga) *m.* violation of many (inferential) rules तदभ्युपगमेऽनेकनियमभङ्गप्रसङ्गाच्च तथाभ्युपगमः ĪśvaSi. (Yā.) 79. 18.

**अनेकनियमविधान** (anekaniyama-vidhāna) *n.* prescription of several rules धर्मशास्त्रे कृष्यनुष्ठानेऽनेकनियमविधानेन तस्यैव तत्र प्रयोगवचनत्वपर्यवसानात् MayūMāli. 273. 9 (*on* iii. 4. 13)

**अनेकनियमादृष्ट** (anekaniyamādṛṣṭa) *n.* unseen merit (resulting) from various religious observances प्राकरणिकसर्वार्थेषु गौणत्वस्य कथंचिद्वक्तुं शक्यतया सर्वत्र विनियोगापत्तेरप्रामाणिकानेकवृत्तिकल्पनानेकनियमादृष्टकल्पना च स्यात् MayūMāli. 211. 3 (*on* iii. 2. 1)

**अनेकनियमानुबन्ध** (anekaniyamānubandha) *adj.* which is in acordance with several rules एवमनेकनियमानुबन्धं धनप्रयोगं कुर्वतो दृष्टमेव फलम् SmṛtiCan. iv. 320. 8.

**अनेकनिर्गमद्वार** (aneka-nirgamadvāra) *n.* many exits or gates अनेकनिर्गमद्वारविवर्जितन्निकेतनः। ... गृहिधर्माय कल्पते YogŚā. 1. 49; RauhiC. App. 1. 3.

**अनेकनिर्देशगोचरा** (anekanirdeśa-gocarā) *adj.* (*f.*) referred to by various mentions, i.e. names मल्लिका वटपत्रा च सुगन्धा वृत्तमल्लिका। ... सैवोक्ता षट्पदानन्दानेकनिर्देशगोचरा KalpaK. 277. 259.

**अनेकनिर्भासिन्** (aneka-nirbhāsin) *adj.* appearing as or shining forth like more than one (ग्रस्तं निरस्तम् ... विकीर्णमेताः स्वरदोषभावनाः) विकीर्णः वर्णान्तरे प्रसृतः, एकोऽप्यनेकनिर्भासीत्यपरे Pradī. i. 82B. 18 (*on* i. 1. 0)

**अनेकनिर्वर्त्य** (aneka-nirvartya) *adj.* to be performed or carried out by many (workmen) अनेकनिर्वर्त्ये कर्मणि परिभाषितभृतेरर्पणप्रकारमाह स एव SmṛtiCan. iv. 472. 2.

**अनेकनिशा** (aneka-niśā) *f.* more than one night परिश्रमम्लानमुखाम्बुजस्य (नृपात्मजस्य)। ... एका निशानेकनिशेव सासीत् VarāṅgaC. 12. 61.

**अनेकनिषेवित** (aneka-niṣevita) *adj.* inhabited by many महावनानि मृगद्विजानेकपसेवितानि (v. l. °निषेवितानि)। आलोकयन्तोऽभिययुः ... धन्विनः MahāBhā. iii. 174. 4.

**अनेकनिष्ठ** (aneka-niṣṭha) *adj.* A relating to or occurring in more than one (entity) एक एव संयोगोऽनेकनिष्ठोऽपि सन् क्वचिच्चलतिप्रत्ययं क्वचित्संयोगमात्रप्रत्ययं च जनयति NyāyPari. 502. 24; (used as noun) what relates to or occurs in more than one एकनिष्ठानेकव्यापाराणामिवानेकनिष्ठानामप्येकधातुत एव निवृत्तभेदानां प्रतीत्यानेकधातुप्रयोगाप्रसक्तेः LaŚabdeŚe. i. 184. 2; B relating to or occuring in many (entities) यस्तु विभुद्रव्यमपि नैच्छत्, तस्यापि सामान्ये स्यात्। तस्याप्यनभ्युपगमे संयोगसमवायादावनेकनिष्ठे स्यात् NyāySiA. 192. 20.

**अनेकनिष्ठता** (anekaniṣṭha-tā) *f.* the state of relating to or occurring in more than one (entity) एकधर्मगतमनेकनिष्ठतानर्हत्वं विरुद्धत्वम् ŚivārkaMaDī. i. 106. 10 (*on* i. 1. 2)

**अनेकनिष्पत्ति** (an-ekaniṣpatti) *adj.* not produced by one (and the same operation of sacrifice) स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् MīmāSū. iv. 2. 1 (ŚābaBh. स्वरुर्न यूपेनैकनिष्पत्तिः स्यात्। यूपमनपेक्षमाणस्य स्वरोर्जोषणादिनोत्पत्तिः)

**अनेकनिष्पत्ति** (aneka-niṣpatti) *f.* production of more than one क्षणिकत्वपक्षे ... अथैकस्मादनेकनिष्पत्तिराहो बहुभ्यो बहुसंभव इति परीक्षणीयम् NyāyMañ. ii. 26.18.

**अनेकनिष्पन्न** (aneka-niṣpanna) *adj.* variously equipped रथैरनेकनिष्पन्नप्रद्योतनरथैरिव। ... पद्मशेखरः। स्वकीयदेशसीमस्थः समभूद् भूरिसैन्यवान् MalliC. 2. 162.

**अनेकनिस्त्रिंशगभस्ति** (aneka-nistriṁśagabhasti) *m.* many rays of light produced from swords अनीकिनीविरुधि गुच्छविभ्रमो भवस्य बभ्रे ...। अनेकनिस्त्रिंशगभस्तिसंस्तवादकाण्डविस्तारितषट्पदैरिव ŚrīKaC. 21. 31 (comm. बहुखड्गप्रभासङ्गात्)

**अनेकनीरचरविकिर** (aneka-nīracaravikira) *m.* various aquatic birds यत्र ... अनेकनीरचरविकिरकलापचापलप्रबलानिलान्दोलितपालिन्दीसंततिभिः ... सरःप्रदेशैः ... श्रियः ... विस्तारयामासुः YaśasCam. i. 199. 6 (comm. बहवो ये ... जलचरपक्षिणः)

**अनेकनीलाद्यात्मक** (aneka-nīlādyātmaka) *adj.* of the nature of more than one blue (item) etc. ज्ञानं नानेकनीलाद्यात्मकम् एकत्वात् PrakaVi. 538.22.

**अनेकनीलोत्पलव्यक्ति** (aneka-nīlotpalavyakti) *f.* many individual blue lotuses न चानेकनीलोत्पलव्यक्तिसाधारणी नीलोत्पलत्वजातिर्भवद्भिरिष्यते Kāśi. i. 277. 19 (*on* 4. 198)

**अनेकनृपपूरित** (anekanṛpa-pūrita) *adj.* full of many kings मासाः सप्ताभवंस्तस्य हयवर्यस्य हेलया। चरतो भारतं वर्षमनेकनृपपूरितम् PadmP. iv. 49. 1.

**अनेकनृपसेवा** (anekanṛpa-sevā) *f.* service of many kings अनेकनृपसेवाभिः किमपूर्णं नृपस्य यत्। अयमारम्भि सेवायै वाहनायेव केसरी TriṣaŚaPuC. i. 5. 206.

**अनेकनृपसेविता** (anekanṛpa-sevitā) *adj.* (*f.*) resorted to by many kings राजा ...। संप्रविश्य सभां दिव्यामनेकनृपसेविताम् BrahmāṇḍP. ii. 49. 31.

**अनेकनेत्र** (aneka-netra) *n.* 1 many eyes यश्च (सुवेलशैलः) ... क्वचिन्निखिलतरूपनीतानेकनेत्रसंततिः शतधृतिरिव YaśasCam. ii. 169. 5 (comm. इन्द्रः अनेकलोचनसहितो भवति); समीक्षितुं यस्य वधूसहस्रमनेकनेत्राण्यपि कर्तुकामः। विधाय वेधा नयने विशाले संमोदते Raghunā. 7. 5; 2 several roots of trees, YaśasCam. ii. 169. 5 (comm. उपनीता अनेकनेत्राणां तरुमूलानाम्। ... संततिः समूहो येन); 3 particular type of animal, YaśasCam. ii. 169. 5 (comm. उपनीता अनेकनेत्राणाम् ... मृगविशेषाणां च संततिः समूहो येन) [*nt.*]

**अनेकनैरन्तर्य** (aneka-nairantarya) *n.* contiguity or close contact with many क्षणिकनिर्धर्मकपरमाणावपि पुञ्जदशायामनेकनैरन्तर्यादिरभ्युपेतत्वात् NyāySiA. 189. 3; पुञ्जदशायामेकस्य परमाणोरंशभेदमन्तरेणानेकनैरन्तर्यमभ्युपगतम् NyāySiA. 253. 29.

**अनेकनैस्त्रिंशिक** (aneka-naistriṁśika) *m.* many swordsmen स भूसुरः ... अनेकनैस्त्रिंशिकैरनुयातः DaśKuC. 17. 2.

**अनेकन्यायसाध्य** (anekanyāya-sādhya) *adj.* to be established by many laws आत्मसमवायि कार्यं लिङ्गादिभिरभिधीयत इत्यनेकन्यायसाध्यम् PrakaPañ. 440.15.

**अनेकन्यायसिद्धत्व** (anekanyāyasiddha-tva) *n.* the state of being what is established by many laws or rules तस्माद्वृत्त्यभेदेऽपि प्रथमप्रतीतेर्वैदिकार्थग्रहणनियामकत्वस्य अनेकन्यायसिद्धत्वात् PūrvottaVāNaMā. 196. 11.

**अनेकप** (an-ekapa) *m.* (*but adj.*, MW.) [enumerated in the *ardharcādi gaṇa*, GaṇRa. 2. 72 (112); 2.72 (113)] A elephant (*lit.* drinking with more than one, i.e. two (organs) trunk and mouth) गजैरनेकैरिव वज्रपातितैः (v.l. अनेकपैर्वज्रहतैरिवाद्रिभिः)। ... निष्टनतीव गौश्चिता MahāBhā. vii. 48. 43; एते ... करविवरगलदविरलसुरभिनिश्वासश्रेणयो गण्डदेशपरामर्शिनः कान्तबृंहिताश्च प्रविलसन्त्यनेकपाः AvantiKa. 87. 7; 14.10; कीर्णं शनैरनुकपोलमनेकपानां हस्तैर्विगाढमदतापरुजः शमाय। ... अम्बु ... आप समतां सितचामरस्य ŚiśuVa. 5. 35; प्रहस्तः ...। अपश्यत् पर्वताकारं लीलायुक्तमनेकपम् PadmP. (Ra.) 8. 410; 33.241; अनेकपानां दशमो द्विवर्जितः स्वसंगुणः क्रीडति सल्लकीवने GaṇiSāSaṁ. 3. 63; गजराजः स्म राजते। सेव्यमान इवायातैर्भक्त्या विश्वैरनेकपैः MahāP. 22.41; कतिपयैरेव ... अनेकपैरथान्यपृष्टः ... अनुससार कौबेरदिक्पथम् (हरिवाहनः) TilaMañ. 233. 11; अनेकपानामनवरतकटकन्दरद्रववद्दानसौरभाकृष्यमाणेन्दिन्दिरसुन्दरीकुलकुवलयितगगनापगाभागम् ... आस्थानमण्डपमास्थाय YaśasCam. i. 367. 5; उत्तानवेदी दुष्टश्च राजसोऽयमनेकपः Mānaso. iv. 3. 239; अनेकपानामयुतं निहत्य। ... उन्मोचितस्तेन स मत्स्यराजः PārthPa. 49; संप्राप्य केशरिकिशोरम् ... उद्भयं भ्रमति यूथमनेकपानाम् SaduktiKa. 251. 15; न्यग्रोधं ते कदाचित्तु

प्रमाणकान्येव भवेयुरनेकपुरुषस्थत्वाद्य नात्र कस्यचित् स्वातन्त्र्यम् TantrVā. 877. 8 (*on* iii. 3. 14)

**अनेकपुरुषस्वामिका** (anekapuruṣasvāmi-kā) *adj. (f.)* having several persons as masters अनेकपुरुषस्वामिका ग्रामस्य दास्यश्च व्रात्या: ManuBh. ii. 225. 10 (*on* 8. 373)

**अनेकपुरुषहार्य** (anekapuruṣa-hārya) *adj.* what is to be carried or borne by many persons चण्डालादिस्पर्शेऽनेकपुरुषहार्याणां व्रीहीणां प्रोक्षणम् Aparā. 259. 22 (*on* 1. 184)

**अनेकपुरुषाधार** (anekapuruṣādhāra) *adj.* existing in, i.e. known by many persons अनेकपुरुषाधारे तु वेदे न तावत् कृतकाशङ्का Kāśi. i. 139. 21 (*on* 2. 149)

**अनेकपुरुषाधिष्ठान** (anekapuruṣādhiṣṭhāna) *n.* presence of many persons ससहायं तु गृहम् अनेकपुरुषाधिष्ठानात् मोषितुमशक्यम् Pradī. iv. 284B. 30 (*on* v. 1. 113)

**अनेकपुरुषानुभाव्य** (anekapuruṣānubhāvya) *adj.* to be experienced by many persons (अर्था:) जाग्रदवस्थानुभूतवस्तुसजातीया: अनेकपुरुषानुभाव्या: कालान्तरस्थायिनश्च न भवन्तीत्यर्थ: ŚrutaPra. iB. 34. 28 (*on* i. 1. 1)

**अनेकपुरुषापेक्षा** (anekapuruṣāpekṣā) *f.* [Inst.] in comparison with or in consideration with many persons ये द्वादश पूगा: कर्मज्ञानेन्द्रियाणि एकादशं मन: द्वादशी बुद्धि: तेषामनेकपुरुषापेक्षया एकैकस्य पूगत्वमुच्यते SanatBh. 296.2 (*on* 4. 7); अनेकपुरुषापेक्षया कस्यचित्सुखमेव कस्यचिद्दु:खं भवति VedāSaṁ. 172. 15.

**अनेकपुरुषासक्ति** (anekapuruṣāsakti) *f.* contingency of more than one soul सत्ताम् ... अनेकपुरुषासक्तिभ्रमान्निरस्तुराम्। जित्वा तान् बुधवैरिण: ... प्रत्याहरद्य: ŚaṅkaDigVi. (Mā.) 4. 110 (comm. क्षणिकविज्ञानवाद्यादिभिर्हताम् अनेकात्मप्रसक्तिभ्रमात्)

**अनेकपुरुषोद्धार्य** (anekapuruṣoddhārya) *adj.* what is to be carried or borne by many persons शूद्रादिस्पृष्टानां बहुत्वेन चानेकपुरुषोद्धार्यत्वं लक्ष्यते। अत एव बौधायनोऽनेकपुरुषोद्धार्याणामल्पतरमशुचित्वं दर्शयति Aparā. 259. 12 (*on* 1. 184); 260. 1 (*on* 1. 184)

**अनेकपुरुषोद्वाह्य** (anekapuruṣodvāhya) *adj.* to be carried or borne by many persons (बहूनां धान्यवाससाम्) बहु अनेकपुरुषोद्वाह्यं यद्धान्यं वासश्चायज्ञियमपि एषां प्रोक्षणं शुद्धिहेतु: ViraMi. 256. 7 (*on* 1. 184)

**अनेकपुरुषोपभोग** (anekapuruṣopabhoga) *m.* enjoyment by many persons अनेकपुरुषोपभोगस्य चिरतरकालमन्तरेणासंभवाद् अस्मार्तकालीनोपभोगस्य प्रामाण्यम् Subodhi. 19. 4 (*on* 2. 27); BālamBha. ii. 43. 28 (*on* 2. 27)

**अनेकपुरुषोपभोग्या** (anekapuruṣopabhogyā) *adj. (f.)* to be (sexually) enjoyed by many men यानेकपुरुषोपभोग्या पुंश्चली सा हि पुरुषव्रातमर्हति ManuBh. ii. 225. 18 (*on* 8. 373)

**अनेकपुरोडाशीयकपाल** (aneka-puroḍāśīyakapāla) *m, n.* several potsherds pertaining to, i.e. meant for (baking) the sacrificial cakes अनेकपुरोडाशीयकपालानां मध्ये एकस्मिन् कपाले गृह्यमाणे ... आग्नेयस्य मुख्यत्वेन ... तदीयकपालस्यैव ग्रहणम् BhāṭṭDī. i. 349. 4 (*on* iii. 4. 20)

**अनेकपुष्प** (aneka-puṣpa) *adj.* **A** having many flowers पुष्पकमनेकपुष्पा: ... समुपहसन्ति लङ्केश्वरं तरव: NalaCam. 2. 3 (27); **B** having various flowers वनान्तमेता वनिता न मोक्तुम् अनेकपुष्पं नृप शक्नुवन्ति NavaSāC.14. 76.

**अनेकपुष्पगुच्छ** (aneka-puṣpaguccha) *adj.* having many bunches of flowers तेषु स्थानेषु ... अनेकपुष्पगुच्छलताग्रथिता वल्ल्यो वसन्ते ... आसते SāmaraU. 267. 14.

**अनेकपुष्पवाटी** (aneka-puṣpavāṭī) *f.* many flower-gardens आलयं च महेशस्य ... अनेकपुष्पवाटीभि: ... विराजितम् ŚivaP. vii (2). 25. 42 (575B.4)

**अनेकपुष्पस्तवक** (aneka-puṣpastabaka) *m.* many bunches of flowers (सिंहलेन्द्रसूनु:) स्वप्ने रसातलात्तत्कालमेवोद्गतमनेकपुष्पस्तबकसंबाधविटपच्छन्नम् ... पारिजातद्रुममद्राक्षीत् TilaMañ. 207. 19.

**अनेकपुष्पाभरण** (aneka-puṣpābharaṇa) *n.* **A** various flowers for ornaments कदाचिदुद्यानगतामपश्यदनेकपुष्पाभरणैश्च शोभिताम्। ... तारां स ताराधिपति: MatsyaP. 23. 29; PadmP. v. 12. 33; **B** various flowers and ornaments, MatsyaP. 23. 29; PadmP. v. 12. 33.

**अनेकपूर्वजन्मोत्थ** (anekapūrvajanmottha) *adj.* arisen, i.e. accumulated in several previous births एतत्तीर्थस्य माहात्म्यम् ...। अनेकपूर्वजन्मोत्थपातकघ्नम् SkandP. iii (2). 24. 1.

**अनेकपूर्ववर्णविषया** (anekapūrvavarṇa-viṣayā) *adj. (f.)* referring to more than one preceding letter एतद्यानेकपूर्ववर्णविषयामेकां स्मृतिमभ्युपगम्योक्तं न पुनरेका सर्ववर्णगोचरा स्मृति: NyāyMañ. i. 337. 32.

**अनेकपृथक्त्व** (anekapṛthak-tva) *n.* the state of being separate from more than one रूपरसगन्धस्पर्शानेकत्वानेकपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा अनित्या: NyāySu. (Ja.) 337B. 13 (*on* ii. 2. 6); 338A.1 (*on* ii. 2. 6); 338A.4 (*on* ii. 2. 6); सर्वत्रानेकत्वानेकपृथक्त्वयोराश्रयगतैकत्वैकपृथक्त्वानि NyāySu. (Ja.) 338A. 13 (*on* ii. 2. 6); 369A. 12 (*on* ii. 2. 6)

**अनेकपृथ्वीपति** (aneka-pṛthvīpati) *m.* many kings अनेकपृथ्वीपतिभाग्यहेमपरीक्षणार्थं कषपट्टिकेव (आविर्बभूवाथ पतिंवरा सा) VikraDeC. 9. 52.

**अनेकपेन्द्र** (anekapendra) *m.* foremost among the elephants, lord of the elephants अधिरोपयति स्म हस्तिकण्ठे जनतां तोषमिषेण जातमात्र:। अधुना पटुतामनेकपेन्द्रे व्यवृणोदित्यपि किं नु विस्मयाय Acyutarā. 2. 52.

**अनेकपेषणादिरूपगुण** (aneka-peṣaṇādirūpaguṇa) *m.* many subsidiary rites or rituals such as pounding etc. अनेकपेषणादिरूपगुणविधाने वाक्यभेदापत्तेश्चानेकगुणविशिष्टं भक्षान्तरमेव फलचमसकरणकं विधीयते BhāṭṭDī. ii. 16. 23 (*on* iii. 5. 15)

**अनेकप्रकरणव्यवहित** (anekaprakaraṇa-vyavahita) *adj.* separated or intervened by many chapters तयोरनेकप्रकरणव्यवहितयो: इह शास्त्रे अन्तरङ्गबलीयस्त्वाश्रयणपरवाक्यस्य धर्मश्रुतस्यापि ... प्रथमश्रुतस्याप्यन्यथानयनं स्यात् PāṇiTaVāNaMā. 28. 23; अनेकप्रकरणव्यवहितानामपि 'कर्मणि द्वितीया' 'बहुषु बहुवचनम्' इत्यादीनाम् ... एकवाक्यतासमर्थनात् PāṇiTaVāNaMā. 29.6.

**अनेकप्रकर्ष** (aneka-prakarṣa) *m.* superiority to more than one द्वयोर्बहुषु चैकानेकप्रकर्षे वर्तमानात् तरप्तमपौ भवत: CāndraVṛ. *on* iv. 3. 45.

**अनेकप्रकल्प** (aneka-prakalpa) *adj.* of various kinds तेषामनेकप्रकल्पो भेद: स्थानं चानियतं नदीपर्वतमरुप्रदेशेष्वन्येषु बाधश्च भावात् AbhidhKoBh. 165. 5 (*on* 3. 59)

**अनेकप्रकार** (aneka-prakāra) *adj.* [*f.* - ā] of various types, kinds or ways नाडीयन्त्राणि अनेकप्रकाराणि अनेकप्रयोजनानि SuśruS. i. 7. 13; AṣṭāSaṁ. i. 168. 10 (1. 34); अनेककजगर्भं तु द्वितीयं परिकीर्तितम्। तदनेकप्रकारं च चक्राब्जं स्यात् तृतीयकम् PauṣkS. 1. 9: 2. 2; रूपमनेकप्रकारं शुक्लादि PadārthaSaṁ. 27. 15; Kiraṇā. 47. 7; बुद्धेर्भेदं निरूपयति सा चानेकप्रकारा PadārthaSaṁ. 172. 13; NyāyKa. 172.14; कपटिके तिष्ठेन्त्येवमनेकप्रकारं सूक्तमवोचत् ViṣṇuP. iv. 6. 64; तत्रानेकप्रकाराणि युद्धानि पृथिवीक्षिताम्। द्रष्टव्यानि मया ViṣṇuP. v. 16. 26; इह ह्यनेकप्रकारा: शब्दा: श्रूयन्ते Tantrākhyā. 11. 7; Pañcā. 12. 24; 25. 17; 66. 23; तन्नि:स्वतेयमनेकप्रकारं मरणम् Tantrākhyā. 71. 12; निर्विण्णोऽस्मीत्यनेन महता भयेनानेकप्रकारेण Tantrākhyā. 82. 21; मन्दविषोऽप्यात्मपुष्ट्यर्थमनेकप्रकारान् गतिविशेषानदर्शयत् Tantrākhyā. 116. 15; उक्तो हि संबन्धार्थान्तरवादेऽनेकप्रकारो दोष: PramāVāSvopVṛ. 101.3; शुश्राव ... मुमूर्षो: ... अनेकप्रकारानालापान् HarṣaC. 327. 5; विरोध: ... अनेकप्रकारोऽयमलंकार: प्रतीयते Kāvyāda. 2. 340; तेनैव गीतादिषु अनेकप्रकारं सर्वगतत्वं वर्णितम् TantrVā. 380. 18 (*on* ii. 1. 5); सा चेयं वेदबाह्येश्वरकल्पनानेकप्रकारा BrahmSūBh. (Śaṅ.) 409. 18 (*on* ii. 2. 37); 518. 17 (*on* ii. 4. 20); 637. 7 (*on* iii. 3. 15); समाप्तं कर्मात्मभूतप्राणविषयं विज्ञानं कर्म चानेकप्रकारम् KenUVāBh. 67. 5 (*on* 1.1); अवाच्यवादान् ... बहून् अनेकप्रकारान् वदिष्यन्ति तवाहिता: GītāBh. (Śaṅ.) 47.10 (*on* 2. 36); 303. 6 (*on* 11. 5); अनेकप्रकारा: पुंसां प्रवृत्तय: BālaKrī. i. 207. 4 (*on* 2.13-15); किं च भावानां च प्राणिनामनेकप्रकारां विचित्रां संस्थितिं को नु वेदेति योन्यम् BālaKrī. ii. 41. 23 (*on* 3. 104); शची रत्नचूर्णैर्बलिम् ... ततान ... अनेकप्रकारै: MahāP. 23. 108; तस्माच्छ्रवणादीन्यभ्यस्यमानानि अपरोक्ष एवात्मन्यनेकप्रकारान् भ्रमान्निवर्तयन्ति IṣṭaSi. 74. 4; विनोदनाद्यनेकप्रकारशरीरपर्यालोचनप्रबन्ध: न ह्ययमियान् कार्यकलापो मिथ्याज्ञानात् प्रवृत्तस्य क्वचिदपि दृष्ट: NyāyMañ. i. 159.13; नैयायिकानामनेकप्रकारपुरुषातिशयवादिनां यथाश्रुतेऽप्यर्थे नात्यन्तमसंभव: NyāyMañ. i. 260. 2; ii. 46. 1; ii. 71.15; अणिमादिशक्तियोगोऽनेकप्रकार: ManuBh. ii. 445. 8 (*on* 11. 236); काश्यामर्थ: सोऽप्यनेकप्रकार: SkandP. iv. 3. 97; हेत्वाभासा:। ते चानेकप्रकारा: NyāySā. 7. 9; वर्णै: पूर्णास्ववर्णा ...। या सन्निष्ठाप्यनिष्ठा प्रविदितजगतो भारतीनां रतीनां सा युष्माकं निमित्तं त्वरितमुपदधात्वित्यनेकप्रकारा JinaŚ. 4. 16; यक्ष एष:। परीक्षितुमनेन सत्त्वम् ... अनेकप्रकारमात्मीयया दिव्यशक्त्या विनिर्मितं मायाजालमखिलमपि ते प्रदर्शितम् TilaMañ. 56. 13; 78. 20; अनेकप्रकाराभि: ... स्तुतिभिरावर्जितराज्यपुण्यभार: ... उपाविशत् (समरकेतु:) TilaMañ. 218. 13; नानाम्यहमनेकप्रकारा भुजंगानां गति: TilaMañ. 283. 10; 428.10; अनुमानेऽप्यनेकप्रकार: संबन्धावगमो देशाद्यपेक्षया भेदात् Kāśi. iii. 111. 16 (*on* 5(5). 22½); यदि नामैव शुभाशुभयोगपरिणामकृतसमुत्पत्तीन्यनेकप्रकाराणि पुण्यानि विद्यन्ते TattvPradī. (A.) 94. 6 (*on* 1. 74);

विशेषकस्तिलको यो ललाटे दीयते तस्य भूर्जादिपत्रमयस्यानेकप्रकारं छेदनमेव च्छेद्यम् JayaMa. 34.14 (*on* 1. 3); मिथ्याज्ञानमनेकप्रकारं भवति TātpaṬ. (Vā.) 82. 20 (*on* i. 1. 1); विश्वं नाना अनेकप्रकारम् PratyabhiHṛ. 6. 12 (3); यादृशानुष्ट्राणामनेकप्रकाराणि आसनानि तादृशानि देवदत्तादिभिः क्रियन्ते Pradī. iii. 103B. 38 (*on* iii. 1. 67); iv. 397A. 26 (*on* v. 3. 74); लोकशब्देन स्थावरजंगमात्मको लोकः। तद्व्यवहारश्चाभिधीयत इत्यर्थः। स च देशकालादिभेदादनेकप्रकारः Kāvyānu. (He.) 6. 13; 272. 23; अनेकप्रकारो बौद्धपक्षः PrakaVi. 516. 18; 573. 22; (उच्चावचाः श्राद्धधर्माः) उच्चावचा अनेकप्रकाराः SmṛtiCan. v. 270. 15; विधिरपि तत्तद्वादिविप्रतिपत्त्यानेकप्रकारः SyādvāMañ. 14 (253); अधिकारोऽनेकप्रकारः PadMañ. *on* KāśiVṛ. *on* P. i. 4. 23 (530. 16); *on* P. vii. 1. 95 (640. 11); प्रकृतं भगवद्दर्शनमेव विषयः। किं सर्वेषामेकप्रकारमुतानेकप्रकारम् TattvPrakā. 180A. 12 (*on* iii. 3. 52); 180B. 3 (*on* iii. 3. 52); प्रामाण्यं किमेकप्रकारं वर्तते। उतानेकप्रकारम् NyāySu. (Ja.) 246B. 13 (*on* ii. 1. 2); अनेकप्रकारो ह्युपजीवोपजीवकभावः NyāySu. (Ja.) 444A. 1 (*on* ii. 3. 14); 466A. 3 (*on* iii. 2. 1); विडम्बनमनेकप्रकारम् DaṇḍaVi. 20. 16; अत्रानेकप्रकारं सौत्रपदव्याख्यानमाक्षेपसमाधानपूर्वकम् ... वार्तिके टीकायां चावगन्तव्यम् YuktiSneha. 37. 8 (*on* i. 1. 4); उपपुराणानि चानेकप्रकाराणि PrasthāBhe. 10. 16; शेषत्वं चानेकप्रकारमत्र निरूप्यते MīmāKau. ii. 134.7 (*on* iii. 1.1)

**अनेकप्रकार** (aneka-prakāra) *m.* 1 various qualifiers यत् सामान्याकारेण प्रवृत्तं सत् अनेकप्रकाराधारभूतं वस्तु ... तद्विशेषणम् JaineVyā. 55.1 (*on* i. 3. 52); 2 various types, kinds or ways तस्मादनुरञ्जनार्थं बालायामुपक्रमादनेकप्रकारा उच्यन्ते JayaMa. 208. 12 (*on* 3.3); [Inst.] in different or various ways येनानेकप्रकारैर्व्यवहरति जगद्येन तेनेश्वरेण। तद्वत् प्रच्छादनीयम् ŚatŚlo. 41; पुच्छम् ... अनेकप्रकारेण चालयन्नपि वानरः। नैव चालयितुं शक्तः SkandP. iii (1). 45. 79; अवनीश्वरोऽपि ... गणकनिवहेन ... मुहुर्मुहुरनेकप्रकारैः कृतोपवर्णनमाकर्ण्य ... प्रियायाः प्रसूतिगृहमविशत् TilaMañ. 76. 23; सेयमनेकप्रकारेण ब्रह्मादीनां साक्षादनभिधानेन साकाङ्क्षोक्तिभङ्गिः SaraKaṇṭhā. 537. 12; तत्रानेकप्रकारेण युद्धानि पृथिवीक्षिताम्। द्रष्टव्यानि BrahmP. 190. 46; अनेकप्रकारेण ... दुःखभागहम् SamarāSaṁ. 4. 395; अनेकप्रकारेण बहुशिष्यान् धन्यान् कृत्वा ŚaṅkaVi. (Ā.) 17. 16; माधवोऽनेकप्रकारेण दिव्यं सुरतं करोति MādhavāĀ. 229 (19); वैषयिक आधारे सप्तमी। विषयत्वं चानेकप्रकारैरित्याह LaŚabdeŚe. ii. 33. 2.

**अनेकप्रकारक** (anekaprakāra-ka) *adj.* [*f.* - ikā] of various types, kinds or ways मिथ्याज्ञानमनेकप्रकारकम् NyāySū. i. 1. 2; NyāyVār. 25. 7 (*on* i. 1. 2); गतागतम्। मध्यवर्णविलेपेन ... अनेकप्रकारकम् VidaMuMa. 3. 23; गुणस्य च सर्वत्राभिनिविशमानत्वेन भेदकता। सा च क्वचिद् वाक्यभेदापत्त्या क्वचिदेकप्रसरताभङ्गादित्यनेकप्रकारिका BhāṭṭDī. i. 129. 8 (*on* ii. 2. 9); एकस्य वस्तुनो निमित्तवशाद्यदनेकैर्ग्रहीतृभिरनेकप्रकारकं ग्रहणं तदुल्लेखः RasGaṅ. 358. 8.

**अनेकप्रकारकालुष्य** (anekaprakāra-kāluṣya) *n.* impurity of various types or kinds आत्मानोऽप्यविद्यापरिकल्पितभेदात्तत्कृतमनेकप्रकारकालुष्यमनुभवन्ति NyāyMañ. ii. 95.8.

**अनेकप्रकारगतिविशेष** (anekaprakāra-gativiśeṣa) *m.* particular gait of various types or kinds मन्दविषोऽप्यात्मपुष्ट्यर्थमनेकप्रकारगतिविशेषानदर्शयत् PañcT. 3. 93 (27) (358.7); Pañcā. 222. 18.

**अनेकप्रकारतस्** (anekaprakāra-tas) *adv.* in various ways मलविद्धमणिव्यक्तिर्यथानेकप्रकारतः। कर्मविद्धात्मविज्ञप्तिस्तथानेकप्रकारतः Laghīya. 1. 57.

**अनेकप्रकारता** (anekaprakāra-tā) *f.* the state of being of various types, kinds or ways विपरीतहेतोर्दर्शनभेदेनानेकप्रकारतां दर्शयितुमाह TātpaṬ. (U.) 329. 13 (*on* 5 (4). 96); सूत्रकारो वितानस्यानेकप्रकारतां दर्शयति MṛtaSaṁ. 101. 7 (*on* 5.8); यत्तु पुनरनावरणमनिन्द्रियं ज्ञानं तस्य समिद्धधूमध्वजस्येवानेकप्रकारतालिङ्गितं दाह्यम् ... पर्यायजातं ज्ञेयतानतिक्रमात् परिच्छेद्यमेव भवति TattvPradī. (A.) 54. 10 (*on* 1. 41)

**अनेकप्रकारत्व** (anekaprakāra-tva) *n.* the state of being of various types, kinds or ways अनेकप्रकारत्वाद् व्यापाराणाम् TantrVā. 708.11 (*on* iii. 1.8); (एभिर्भाववविशेषैः) बहुवचनं प्रकृतिदेशकालदशाहेत्वादिभेदेनानेकप्रकारत्वज्ञापनार्थम् AbhinBhā. i. 318. 23 (*on* 6. 63); अनेकप्रकारमेव भगवद्दर्शनम्। तत्साधनोपासनस्यानेकप्रकारत्वात् TattvPrakā. 108B. 4 (*on* iii. 3. 52); 191A. 12 (*on* iii. 4. 23); वादस्यानेकप्रकारत्वेऽपि ... धर्मिविशेषोऽप्यर्थसिद्ध एव NyāyPari. 203. 6; यत्रासत्यपि ग्रहीत्रनेकत्वे विषयाश्रयसमानाधिकरणादीनां संबन्धिनामन्यतमानेकत्वप्रयुक्तम् एकस्य वस्तुनोऽनेकप्रकारत्वम् RasGaṅ. 361. 17; 364. 12.

**अनेकप्रकारदुःख** (anekaprakāra-duḥkha) *n.* misery of various types or kinds एतानि योगाङ्गानि मुमुक्षुभिः सर्वेषु ब्रह्मादिस्थानेष्वनेकप्रकारदुःख ... सेवितव्यानि NyāySā. 39. 8.

**अनेकप्रकारप्रयोजन** (anekaprakāra-prayojana) *adj.* having various kinds of purposes, i.e. results बीजानामुत्पत्तिरनेकप्रकारप्रयोजनस्य रसस्य च हेतुः Avalo. 7. 1 (*on* 1. 24)

**अनेकप्रकारबल** (anekaprakāra-bala) *n.* various kinds of strength, i.e. strength in various divisions होराशास्त्रेऽपि ... ग्रहाणां दिक्स्थानकालचेष्टाभिरनेकप्रकारबलनिर्धारणम् BṛSaṁ. 2. 4 (3)

**अनेकप्रकारभुजिक्रिया** (anekaprakāra-bhujikriyā) *f.* various types or kinds of acts of eating एकधा भुङ्क्ते इत्यादौ अनेकप्रकारभुजिक्रियापेक्ष एकप्रकारस्य भुजेरस्त्येव पृथग्भावः Pradī. iv. 371A. 6 (*on* v. 3. 42)

**अनेकप्रकारम्** (anekaprakāram) *adv.* in various ways or manners (पार्थिवः) तैः ... विस्मयस्मेरदृष्टिभिरनेकप्रकारमभिनन्द्यमानः परां मुदमधत्त TilaMañ. 63. 7; 353.4; (स्वल्पोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा) पुरस्तादनेकप्रकारं विस्तारी हेतुविशेषः Avalo. 5. 6 (*on* 1. 17); सा च अतीववल्लभानेकप्रकारं परितोष्यमाणापि न प्रसीदति Pañcā. 246. 20; अङ्गित्वं त्वर्थात्। ... तद्यानेप्रकारं विचार्यते BhāṭṭDī. i. 181. 15 (*on* iii. 1. 1)

**अनेकप्रकारयुक्त** (anekaprakāra-yukta) *adj.* associated with, i.e. consisting of various kinds, i.e. forms आश्रयाणामुष्ट्राणां भेदादनेकप्रकारयुक्तानि आसनानि भिन्नानि Pradī. iii. 103B. 34 (*on* iii. 1. 67)

**अनेकप्रकाररूप** (anekaprakāra-rūpa) *n.* various kinds of colours क्वचिदेकस्यामपि व्यक्तावनेकप्रकाररूपसमावेशः NyāyKa. 30.3.

**अनेकप्रकारवत्** (anekaprakāra-va(n)t) *adj.* having various types, kinds or ways यत् सामान्याकारेण प्रवृत्तमनेकप्रकारवद् वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकत्र प्रकारे व्यवस्थापयति तद् भेदकं विशेषणमिति Nyās. i. 366. 22 (*on* ii. 1. 57); Prasā. i. 532. 6.

**अनेकप्रकारवत्त्व** (anekaprakāravat-tva) *n.* the state of having various types or kinds अनेकप्रकारवत्त्वाभावान्न संशयान्तर्भावः इति चेन्न, किं शब्दसामर्थ्यात् अनेकप्रकारवत्त्वलाभात् TarkSaṁ. (Ā.) 83. 9.

**अनेकप्रकारवृक्षरस** (anekaprakāra-vṛkṣarasa) *m.* various types of tree-saps अनेकप्रकारवृक्षरसानामपि मधुराम्लतिक्तकटुकादीनां मधुत्वेन गतानां मधुरादिभावेन विवेको गृह्यते ChāndoUBh. 387.5 (*on* vi. 9. 2)

**अनेकप्रकारवैचित्र्य** (anekaprakāra-vaicitrya) *n.* various kinds of strikingness उपमैवानेकप्रकारवैचित्र्येणानेकालंकारबीजभूतेति प्रथमं निर्दिष्टा AlaṅkāSa. 26.1.

**अनेकप्रकारशक्ति** (anekaprakāra-śakti) *f.* various types of powers हतदानवा हताः दानवाः अनेकप्रकारशक्तिरूपधरया ... यया LalitāTriBh. 291. 14 (*on* 21)

**अनेकप्रकारसंसृष्टि** (anekaprakāra-saṁsṛṣṭi) *f.* various types of combinations (of figures of speech) एवमियमनेकप्रकारसंसृष्टिर्गुणालंकारसंकरप्रभवाभिमन्तव्या SaraKaṇṭhā. 732.8.

**अनेकप्रकारसंभावना** (anekaprakāra-sambhāvanā) *f.* possibility in various ways दीर्घसमासासंघटनासमासानामनेकप्रकारसंभावनया कदाचिद्रसप्रतीतिं व्यवदधाति Dhvanyā. 320. 6 (*on* 3.6); Kāvyānu. (He.) 245.18.

**अनेकप्रकारसामर्थ्य** (anekaprakāra-sāmarthya) *n.* various kinds of capacities or powers बहुविधप्रकारभिन्नैर्वायुभिरिति। तदुत्पादने अनेकप्रकारसामर्थ्यभिन्नैर्वायुभिरित्यर्थः Sphuṭā. iii. 85. 24 (*on* 3. 49)

**अनेकप्रकाराढ्यत्व** (anekaprakārāḍhya-tva) *n.* the state of being rich in various ways उभाविमावाढ्यावित्युक्तेऽनेकप्रकाराढ्यत्वसंभवात् प्रतिपत्ता किंकृतमनयोराढ्यत्वमिति संदिहानः पृच्छति Pradī. vii. 39. 14 (*on* viii. 1. 12)

**अनेकप्रकारोपकारिन्** (anekaprakāropakārin) *adj.* (used as noun) (one) who helps in various ways तदित्थमनेकप्रकारोपकारिणां किं ब्रवीमि NalaCam. 3.12(9)

**अनेकप्रकृति** (aneka-prakṛti) *f.* 1 many characters अनेकयुक्ति यद्वाक्यमनेकार्थप्रसाधकम् (v.l. अनेकप्रकृतिस्थितम्)। अनेकवाक्यसंयुक्तं तन्निर्भासनमुच्यते NāṭyaŚā. 16. 26; 2 various kinds of people or subjects राज्ञोऽनेकप्रकृतिमद्यथा पुरम् ChāndoUBh. 472. 13 (*on* viii. 1. 1); 3 more than one archetype एकविध्यन्तेनैव निराकाङ्क्षत्वात् ... नियामकाभावादनियमेनानेकप्रकृतिविध्यन्तप्राप्तिः BhāṭṭDī. iii. 1. 7 (*on* viii. 1. 1)

**अनेकप्रजनोत्सेध** (anekaprajanotsedha) *adj.* which has grown tall through many generations अनेकप्रजनोत्सेधा महापुष्पफलोपगाः ...। महावृक्षाः समुत्पन्नाः ... मन्दरस्य गिरेः शृङ्गे VāyuP. i. 35. 18.

**अनेकप्रणतसामन्त** (aneka-praṇatasāmanta) *m.* many humble (*lit.* bent) feudatories अस्ति ... तस्यां चानेकप्रणतसामन्तमुकुटालीढपादपीठः सुरथो नाम राजा Pañcā. 102. 28.

**अनेकप्रतानगहना** (anekapratāna-gahanā) *adj. (f.)* **1** profound or deep due to various ramifications यं च समासाद्य ... लतेव महाप्रादपमनेकप्रतानगहना विस्तारमुपययौ प्रज्ञा Kād. 56. 18 (comm. तत्तद्विषयावगाहनक्षमेत्यर्थः); **2** intricate due to its many tendrils. Kād. 56. 18 (comm. कुटिलतन्तुभिर्गहना संकुला)

**अनेकप्रतिग्राह** (aneka-pratigrāha) *m.* many spittoons स यदा जानीयात् ... दोषम् ... स्थानेभ्यः प्रविचलितम् ... ऊर्ध्वमभिमुखीभूतं समुपस्थितानेकप्रतिग्राहः ... वमेत् AṣṭāSaṁ. i. 139. 20 (1. 27)

**अनेकप्रतिज्ञत्व** (anekapratijña-tva) *n.* the state of having many propositions न चानेकप्रतिज्ञत्वमपि पक्षाभासत्वमिति बहुप्रतिज्ञं यत्कार्यम् ...। कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया VyavaMa. 14. 3.

**अनेकप्रतिज्ञा** (aneka-pratijñā) *f.* many propositions or assertions यत्र त्वनेकपदानामप्येकसाधनेन साध्यता तत्र साध्यभेदादनेकप्रतिज्ञा युक्ता VyavaNi. 43. 10.

**अनेकप्रतिपत्ति** (aneka-pratipatti) *f.* **1A** assumption of several (forms or bodies) विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् BrahmSū. i .3. 27; अनेकप्रतिपत्तेः। एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः संभवति BrahmSūBh. (Śaṅ.) 188. 1 (*on* i. 3. 27); अनेकप्रतिपत्तेरनेकविग्रहप्रतिपत्तेरित्यर्थः। ... अनेका नानारूपप्रतिपत्तिः तस्या दर्शनात् BrahmSūBh. (Bhā.) 61. 10 (*on* i. 3. 27); BrahmSūBh. (Rā.) 315. 12 (*on* i. 3. 26); VedāntKau. 98. 21 (*on* i. 3. 27); AṇuBh. 88. 19 (*on* i. 3. 27); **1B** various knowledges अज्ञानसिद्धानां देवानामनेकप्रतिपत्तिसंभवात् ŚaṅkaVi. (Ā.) 253. 3; **2** many undertakings or performances इदं चोत्तरार्धत्यादिनानेकप्रतिपत्तिविधाने BhāṭṭDī. ii. 270. 21 (*on* vi. 4.2)

**अनेकप्रतिपत्तृकर्तृक** (anekapratipattṛkartṛ-ka) *adj.* having more than one perceiver or knower as agent एकस्यानेकप्रतिपत्तृकर्तृकत्वेनानेकधोट्टङ्कितत्वात् (उल्लेखालंकारः) Ekāva. 8. 10 (5) (227. 5)

**अनेकप्रतिपत्तृसाधारण** (anekapratipattṛ-sādhāraṇa) *adj.* common to many knowers शब्दो नात्मगुणः आत्मान्तरग्राह्यत्वाद् अनेकप्रतिपत्तृसाधारणत्वात् NyāyKa. 60. 21; अन्ये त्वात्मान्तरग्राह्यत्वादिति अनेकप्रतिपत्तृसाधारणत्वादिति हेत्वर्थं वर्णयन्ति Kiraṇā. 109. 11; NyāySu. (Ja.) 212B. 7 (*on* i. 4. 6); Kiraṇā. 109. 14.

**अनेकप्रतिपत्त्यर्थम्** (anekapratipattyartham) *adv.* for the sake of knowing many (individuals) अनेकप्रतिपत्त्यर्थं तु तदुपयोगः तस्य प्रागप्रतीतेः ĀtmaTaVi. 314. 10.

**अनेकप्रतिभा** (aneka-pratibhā) *f.* **1** appearance or emergence of many ideas यस्त्वनिर्धारितार्थानामनेकप्रतिभोद्भवः। स लिङ्गेऽप्यस्फुटे दृष्टस्तस्मात्तेन भिद्यते ŚlokaVār. 5(5). 32 (415. 3); **2** many creative imaginations अनेकप्रतिभोत्पत्तिहेतुत्वमपि विद्यते। अस्पष्टलिङ्गे कस्मिंश्चिदथ इत्यादिशब्दवत् NyāyMañ. i. 139. 27.

**अनेकप्रतिभास** (aneka-pratibhāsa) *m.* appearance or manifestation of more than one विषयभेदे अभ्युपगम्यमाने ... अनेकप्रतिभासे च न एकं प्रतिभातम् PratyabhiVi. ii. 41. 2 (*on* ii. 2. 3)

**अनेकप्रतिभू** (aneka-pratibhū) *m.* many sureties यस्मिन्ननेकप्रतिभूसंभवस्तत्र कथं दाप्यस्तत्राह Mitā. 171. 23 (*on* 2. 55); अनेकप्रतिभूदेयविषयं तु विशेषमाह याज्ञवल्क्यः SmṛtiCan. iv. 355. 7.

**अनेकप्रतिमाविभूषित** (anekapratimā-vibhūṣita) *adj.* adorned with many images तडागं निकषा श्रीपार्श्वनाथस्य चैत्यमनेकप्रतिमाविभूषितमास्ते ViviTīKa. 74. 24.

**अनेकप्रतियोगिक** (anekapratiyogi-ka) *adj.* having more than one relational adjunct अनेकप्रतियोगिकैकरूपसंबन्धवत्त्वं साधारण्यम् ŚrutaPra. iA. 250. 2 (*on* i. 1. 1)

**अनेकप्रतियोगिभेद** (anekapratiyogi-bheda) *m.* diversity of many counterpositives अनेकप्रतियोगिभेदेऽपि तत्तद्व्यावृत्तवस्त्वैक्यम् ŚatDū. 165. 14.

**अनेकप्रतिषेधसंभव** (anekapratiṣedha-sambhava) *m.* possibility of prohibition of more than one (operation) (आम एकान्तर ऐकश्रुत्यप्रतिषेधः) तत्र अनेकप्रतिषेधसंभवात्प्रश्नः Pradī. vii. 56. 12 (*on* viii. 1. 55)

**अनेकप्रतीति** (aneka-pratīti) *f.* **A** more than one cognition स्वतस्तु यानेकप्रतीतिरनुभूयते घटोऽयं पटोऽयमिति तत्र ... भिन्नविषयं बुद्धिद्वयम् NyāyMañ. ii. 31. 9; **B** cognition of more than one या तु वाक्ये तेषां (शब्दानाम्) प्रयोगेऽनेकप्रतीतिर्माषो माषा इति सा सविभक्तिकेभ्यः Prasā. i. 946.9.

**अनेकप्रतीत्यभाव** (anekapratīty-abhāva) *m.* absence of more than one cognition स्वरूपत्वेन च भेदस्यानेकप्रतीत्यभावान्नान्योन्याश्रयादेरवकाशः Vādā. 115.1.

**अनेकप्रत्यनीकता** (anekapratyanīka-tā) *f.* the state of having many enemies अनेकप्रत्यनीकतया लोकेऽस्मिन् न संतापसागरे न वाल्लभ्यतीर्थं लभते AvantiKa. 123. 18.

**अनेकप्रत्यय** (aneka-pratyaya) *m.* **1Ai** several cognitions देवदत्तस्य रूपरसस्पर्शप्रत्ययाः एकानेकनिमित्तकाः स्मृत्या सह मयेति प्रतिसंधानात् कृतसंकेतानां वृद्धानामेकस्मिन् नर्तकीभ्रूक्षेपे युगपदनेकप्रत्ययवत् NyāyVār. 70. 16 (*on* i. 1. 10); **1Aii** more than one cognition नैकं यस्त्वयुगपत्कालानेकप्रत्ययविषयो भवति NyāyVār. 197. 1 (*on* ii. 1. 16); **1B** cognition of more than one नैव संख्या नास्तीति ब्रुवता एकानेकप्रत्ययानां विधीयमानं प्रतिषिध्यमानं वा निमित्तमुपादेयम् NyāyVār. 80. 2 (*on* i. 1. 14); 95.14 (*on* i. 1. 23); एकं नास्तीत्यनेकप्रत्ययोऽव्याहतः NyāyVār. 244. 2 (*on* ii. 1. 34); 247. 9 (*on* ii. 1. 34); एकत्रानेकप्रत्यये समुच्चये(च)। 'गार्ग्यौ वात्स्यश्च' Prasā. i. 305. 6; **2** more than one ground or cause यदि ... अनेकप्रत्ययजन्यत्वेऽप्येकत्वात् नानात्वप्रसङ्गाभावः सिध्यति कार्यस्य HetuBiṬ. 109. 18; **3** various affixes पचति पक्ष्यति पक्ष्यानित्यादौ फुत्कारादीनां प्रतीयतेऽनेकप्रत्ययानां तत्र शक्तिर्वाच्या VaiyāBhū. 40. 10 (*on* 7)

**अनेकप्रत्ययजन्य** (anekapratyaya-janya) *adj.* to be produced by many causes सर्वं कार्यमङ्कुरादिकं विशेषलक्षणं चानेकप्रत्ययजन्यम् HetuBiṬ. 114. 16.

**अनेकप्रत्ययनिमित्त** (anekapratyaya-nimitta) *adj.* caused by more than one cognition भवतः कालान्तरावस्थाने किं प्रमाणम् उक्तं प्रमाणं रूपरसस्पर्शप्रत्ययानामेकानेकप्रत्ययनिमित्तत्वप्रतिसंधानादिति NyāyVār. 197. 12 (*on* ii. 1. 16)

**अनेकप्रत्ययनिवारण** (anekapratyaya-nivāraṇa) *n.* avoidance of appending of various affixes तस्मादनेकप्रत्ययनिवारणाय 'एको गोत्रे' इति नियमः क्रियते Pradī. iv. 127B. 27 (*on* iv. 1. 93)

**अनेकप्रत्ययप्रसङ्ग** (anekapratyaya-prasaṅga) *m.* undesired occasion for appending of various affixes दशावयवा यस्य संघस्य स दशतयः संघः तत्र भवा दाशतयी। अनेकप्रत्ययप्रसङ्गप्रतिपादनपरं चैतत् Pradī. iv. 127A. 34 (*on* iv. 1. 93); iv. 122B. 5 (*on* iv. 1 .93); iv. 124A.1 (*on* iv. 1. 93); धात्वधिकारविहितानेकप्रत्ययप्रसङ्गे वक्तुर्विवक्षापूर्विका शब्दप्रवृत्तिः इति कर्तृविवक्षायाम् ... कर्तरि लकारः Prasā. ii. 13. 5.

**अनेकप्रत्ययानुपपत्ति** (anekapratyayānupapatti) *f.* untenability of appending of various affixes स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः Vār. 1. *on* P. iv. 1. 3; एकोऽयमर्थः स्त्रीत्वं नाम तस्यैकत्वादेकवचनमेव प्राप्नोति। अनेकप्रत्ययानुपपत्तिश्च MahāBh. ii. 198. 26 (*on* iv.1. 3)

**अनेकप्रत्ययोत्पत्ति** (anekapratyayotpatti) *f.* origination, i.e. appending of various affixes अनेकप्रत्ययोत्पत्तिरविरुद्धा Pradī. iv. 27A. 13 (*on* iv. 1. 3)

**अनेकप्रथमशकलाभाव** (anekaprathamaśakalābhāva) *m.* non-existence of many first splinters कर्मकालत्वेऽपि नास्य भेदः संभवति, एकस्य यूपस्यानेकप्रथमशकलाभावेन स्वरूपभेदासंभवात् MayūMāli. 820. 17 (*on* xi. 3.5)

**अनेकप्रदीपप्रभा** (anekapradīpa-prabhā) *f.* splendour of more than one lamp बहूनामपि पशूनां संनिहितानि निर्गतानि चाक्षुषाणि तेजांसि अनेकप्रदीपप्रभावदेकीभवन्ति ŚāstrDī. 628. 3 (*on* ix. 3. 10)

**अनेकप्रदीपभाव** (anekapradīpa-bhāva) *m.* the state of being more than one lamp प्रदीप एकः अनेकप्रदीपभावमापद्यते, विकारशक्तियोगात् BrahmSūBh. (Śaṅ.) 856. 14 (*on* iv. 4. 15)

**अनेकप्रदेशत्व** (anekapradeśa-tva) *n.* the state of occupying several parts of space अनेकप्रदेशत्वेन शरीरवत्कायव्यपदेशः SarvaDaSaṁ. 3. 232; कालस्यानेकप्रदेशत्वाभावेनास्तिकायत्वाभावेऽपि द्रव्यत्वमस्ति SarvaDaSaṁ. 3. 254.

**अनेकप्रधानका** (anekapradhāna-kā) *adj. (f.)* having various principal rites अनेकप्रधानकाः पवमानेष्टयः ... तत्तत्कालविशिष्टैकप्रयोगविधानात् 'पौर्णमास्यां पौर्णमास्यां यजेत' इत्यादिवदेकप्रयोगेणैव कर्तव्याः BhāṭṭDī. iv. 198.14 (*on* xi.4.4)

**अनेकप्रधानसमवाय** (anekapradhāna-samavāya) *m.* concurrence, i.e. simultaneous performance of various principal rites एवं दर्शपूर्णमासादिष्वनेकप्रधानसमवाये पदार्थानुसमय एव न्याय्यः ŚāstrDī. 421. 4 (*on* v. 2. 1)

**अनेकप्रधानसंबन्ध** (anekapradhāna-sambandha) *m.* relation with various principal rites तेषां चौपदेशिकानां कार्यसंबन्धानां चाङ्गानामनेकप्रधानसंबन्धे प्रयुक्तिविशेषस्तन्त्रमनुष्ठानस्य PrakaPañ. 487. 23.

**अनेकप्रधानाङ्गवद्भाव** (aneka-pradhānāṅgavadbhāva) *m.* several principal and subsidiary-like status केवलमाचार्येण लाघवायानेकप्रधानाङ्गवद्भावप्रतिपत्तये पृथगुपदेशः कृतः Pradī. vii. 77. 8 (*on* viii. 2. 1)

**अनेकप्रध्वंस** (aneka-pradhvaṁsa) *m.* destruction of many यथा एकयैव सामग्र्या ... अनेककार्योत्पत्तिर्निर्व्यूढा, तद्वत् प्रध्वंसमानतत्तत्स्वरूपसहकारिभेदभिन्नया अनेकप्रध्वंसोऽप्युपपन्नः NyāySiA. 253. 2.

**अनेकप्रपञ्च** (aneka-prapañca) *adj.* having various manifestations चेतनमेकमनेकप्रपञ्चस्य जगत उपादानम् BrahmSūBh. (Śaṅ.) 360. 2 (*on* ii. 2.9)

**अनेकप्रपञ्च** (aneka-prapañca) *m.* many diversities ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्षत्वात् ... ज्ञानोत्पत्तौ ... नोपयोगः BrahmSūBh. (Rā.) 157. 2 (*on* i. 1. 4)

**अनेकप्रबन्ध** (aneka-prabandha) *m.* many compositions or literary works कर्तानेकप्रबन्धानामत्र प्रकरणे कविः। ... यशश्चन्द्र इति श्रुतः MudriKu. 1. 7; अनेकप्रबन्धाढ्यकाव्यगोष्ठीगरीयसा। कालः सुखेन याति स्म गुरुराज्ञोः PrabhāC. 94. 29; रामचन्द्रः ...। येनानेकप्रबन्धाः क्षितिपतिसमितिख्यातविद्वत्प्रबोधोद्बोधार्थं चक्रिरे Prasā. ii. 797. 4.

**अनेकप्रबन्धकरण** (anekaprabandha-karaṇa) *n.* act of composing of many literary works निबन्धनेष्वयं विशेष इति चेन्न, तत्राप्येकेन विदुषानेकप्रबन्धकरणदर्शनात् ŚatDū. 55. 23.

**अनेकप्रभ** (aneka-prabha) *adj.* having much splendour एषा चन्द्रमयूखरञ्जितलता ... यच्छन्तीव विभाति भास्वरमणिव्रातान् अनेकप्रभान् GopāKeCan. 136. 6.

**अनेकप्रभावनिधान** (anekaprabhāva-nidhāna) *n.* reservoir or treasure of various powers तव पुत्रो दशयोजनान्तरे यमुनापरतीरेऽनेकप्रभावनिधानं वर्धिष्यते PurāPraSaṁ. 92. 18.

**अनेकप्रभेद** (aneka-prabheda) *m.* many varieties or distinctions भवन्त्युत्तमाः स्वामिनस्तत्र चाम्भोधितुल्यान्प्रभूताननेकप्रभेदान् समासाद्य सौख्यम् PadmP. (Ra.) 78.62 (34); स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलंकाररसादयश्चेत्यनेकप्रभेदप्रभिन्नो दर्शयिष्यते। सर्वेषु च तेषु प्रकारेषु तस्य वाच्यादन्यत्वम् Dhvanyā. 50. 1 (*on* 1. 4)

**अनेकप्रमाण** (aneka-pramāṇa) *n.* **i** more than one means of valid knowledge एकत्र विषये विरोधविफलत्वाभ्यामनेकप्रमाणप्रवृत्त्यनुपपत्तेः NyāyMañ. i. 28. 10; i. 30. 28; नन्ववयवशक्त्यार्थप्रतिपादनेऽपि प्रधानस्यानेकप्रमाणगम्यतयाभ्यस्तत्वादस्ति प्रथमावगतिः ŚrutaPra. ii. 22. 29 (*on* i. 3. 9); परप्राप्तिः ... सा त्वनेकप्रमाणबाधितेति पूर्वमवोचाम AṇuBh. 260. 16 (*on* iii. 3. 54); **ii** many means of valid knowledges, i.e. authoritative statements न चानेकप्रमाणावगतमिदं ब्रह्मशब्दप्रवृत्तिनिमित्तम् ... संकोचयितुमपि शक्यम् ŚivārkaMaDī. i. 94. 7 (*on* i. 1. 1); i. 423. 28 (*on* i. 3. 11)

**अनेकप्रयाजार्थत्व** (anekaprayājārtha-tva) *n.* the state of being meant for more than one fore-offering or fore-sacrifice न चैकस्मिन्यागे हविर्द्वयं नान्वेतीति शङ्क्यम्। वचनबलादेकैकस्य चतुर्गृहीतस्य हविषोऽनेकप्रयाजार्थत्ववदनेकानुयाजार्थत्ववत् ... एकैकयागार्थत्वस्याप्युपपत्तेः VidhiRa. 9 (53. 14)

**अनेकप्रयोग** (aneka-prayoga) *adj.* consisting of many employments or expressions प्रतिषेधहेतुः ...। स प्रयोगवशेन तत्तद्विरुद्धाद्यगतिगतिभेदप्रयोगतोऽनेकप्रयोगः उक्तः PramāVāSvopVṛ. 13. 6.

**अनेकप्रयोग** (aneka-prayoga) *m.* **1** more than one performance (आज्यधारा) पूर्णयम् ... होतव्या कर्मसिद्धये। एका अनेकप्रयोगाणां, न तु कर्मणि कर्मणि PāraS. 7. 222; **2A** more than one employment or expression प्रकृतिसारूप्यद्वारेणापभ्रंशाः प्राकृतीमेव शक्तिमाविर्भावयन्तोऽर्थप्रतिपत्तावुपयोगं गच्छन्ति ...। तेनानेकप्रयोगेऽपि कश्चिदेवार्थसंगतः TantrVā. 226.16 (*on* i. 3. 23); **2B** various employments or expressions आसत्तिविशेषवशादनेकप्रयोगानुगतेश्च व्यवस्था NyāyPari. 395.2.

**अनेकप्रयोजन** (aneka-prayojana) *adj.* serving many purposes, having many objectives नाडीयन्त्राणि अनेकप्रकाराणि अनेकप्रयोजनानि SuśruS. i. 7. 13; AṣṭāSaṁ. i. 168. 10 (1. 34); कालोत्थानस्य ... रसानामन्यथाकरणस्य प्रयोगाभिधानभूत इत्यनेकप्रयोजनः प्रवेशकः स्यात् NāṭaLaRaK. 342; नानाप्रयोजन इति अनेकप्रयोजनो नियोगः प्रेषणम् PadMañ. *on* KāśiVṛ. *on* P. viii. 1. 61 (306. 13)

**अनेकप्रयोजन** (aneka-prayojana) *n.* **i** many purposes or objectives अनेकप्रयोजनदर्शनात् चानुबन्धानां तकारस्तत्कालग्रहणार्थश्च स्यात् Pradī. v. 165B. 5 (*on* vi. 1. 185); PadMañ. *on* KāśiVṛ. *on* P. vi. 1. 185 (665. 12); अनेकप्रयोजनसंपत्तिर्निपातनाद् भवति Pradī. v. 187A. 22 (*on* vi. 2. 2); vi. 222. 20 (*on* vii. 3. 86); विप्रतिषेधसूत्रे अन्तरङ्गबलीयस्त्वस्य अनेकप्रयोजनोपन्यासानन्तरम् 'एतान्यस्याः परिभाषायाः प्रयोजनानि' इति PāṇiTaVāNaMā. 26. 16; **ii** more than one purpose or objective 'क्रपू सामर्थ्ये' इत्यस्यानन्तरं वृत्करणं पठ्यते तद् घुतादीनां वृतादीनां च समाप्त्यर्थं भविष्यति। एकस्यानेकप्रयोजनाविरोधात् Pradī. vi. 139. 18 (*on* vii. 2. 59)

**अनेकप्रयोजनत्व** (anekaprayojana-tva) *n.* the state of having many purposes or objectives अनेकप्रयोजनत्वमस्य वचनस्य प्रश्नद्वारेण दर्शयति Pradī. iii. 264A. 35 (*on* iii. 4. 26); 'वृत्तम्' इति द्वितीयो [illegible] णिलोपनियमार्थो गुणप्रतिषेधार्थश्च, अनेकप्रयोजनत्वान्निपातनानाम् Pradī. v. 317B. 19 (*on* vi. 4. 52); v. 370B. 32 (*on* vi. 4. 174); न केवलमर्थस्यानेकप्रयोजनत्वमपि तु शब्दस्यापि Pradī. vii. 84. 17 (*on* viii. 2. 3)

**अनेकप्रवर्तकाभाव** (anekapravartakābhāva) *m.* absence of many impellent forces or prompters प्रवृत्त्यभावविरोधः शब्दार्थ इति, तदप्यनेकप्रवर्तकाभावादेवायुक्तम् NyāyMa. 240. 8.

**अनेकप्रवर्तित** (aneka-pravartita) *adj.* impelled or prompted by more than one न हि एकं वाक्यमनेककर्तृकमिति संभवति। संभवति त्वनेकप्रवर्तितम् NyāySu. (Ja.) 238A. 7 (*on* ii. 1. 2)

**अनेकप्रवाह** (aneka-pravāha) *adj.* having many streams or flows शतधारमनेकप्रवाहं यदुदकम् ... तेनोदकेन त्वाम् ... अभिषिञ्चामि VīraMi. 334. 27 (*on* 1. 281)

**अनेकप्रश्न** (aneka-praśna) *m.* many questions अर्थान्तरव्यवधानशङ्कानिवृत्त्यर्थमनेकप्रश्नतत्प्रतिवचनक्रमरूपतां प्रकरणस्य दर्शयति ŚrutaPra. ii. 407. 25 (*on* iii. 1.1)

**अनेकप्रस्कन्दनक्रम** (aneka-praskandanakrama) *m.* many successive leaps अनेकप्रस्कन्दनक्रमप्राप्यमपि तं गिरितटं स महासत्त्वः स्ववीर्यातिशयात् खग इवाधिरुरोह JātaMā. 178. 3 (27. 7(15))

**अनेकप्रस्तार** (aneka-prastāra) *adj.* of more than one layer एकप्रस्तारे [एव] अनेकप्रस्तारेण पुरीषेण व्यवहिते इष्टकासंचिते चितिशब्दो वर्तते SaṅkarKāBh. 64. 16 (*on* ii. 1. 35)

**अनेकप्रस्ताव** (aneka-prastāva) *adj.* [*f.* - ā] (Sāmans) having several preludes or introductory words प्रस्तोता कुशा विदध्यात् ... आद्येऽनेकप्रस्तावेषु LāṭyāŚS. ii. 6. 5; आद्येऽनेकप्रस्तावासु DrāhyŚS. v. 2. 10 (comm. अनेकप्रस्तावयुक्तासु स्तोत्रीयासु)

**अनेकप्रस्तावादिभक्ति** (aneka-prastāvādibhakti) *adj.* (Saubhara Sāman) consisting of many (i.e. five) divisions like prelude etc. अनेकप्रस्तावादिभक्तिनि सौभरे कतमस्यां भक्तौ हीषादयः प्रयुज्यन्ताम् TantrVā. 574. 16 (*on* ii. 2.29)

**अनेकप्रहत** (aneka-prahata) *adj.* struck, i.e. played by many उदपादि च ... अनेकप्रहतपटुपटहझल्लरीमृदङ्गवेणुवीणागीतनिनादानुगम्यमानः स्नानशङ्खानाम् ... ध्वनिः Kād. 16. 10; अनेकप्रहतातोद्यवेणुवीणालयानुगम्। पुरः संगीतमातेनुस्तयोर्विद्याधराङ्गनाः PāṇḍaC. 5. 164.

**अनेकप्रहितदूत** (anekaprahita-dūta) *m.* messenger(s) sent by various (kings) अनेकप्रहितदूतहस्तविन्यस्तवस्तुविरचितरङ्गार्चनम् (राजसदनम्) YaśasCam. i. 344. 7 (*but* comm. अनेके बहवः ... दूताः)

**अनेकप्राकार** (aneka-prākāra) *m.* several ramparts आः कुतोऽस्यानेकप्राकाररक्षकरक्षिते ... कन्यान्तःपुरे प्रवेशः NalaCam. 7. 35 (16)

**अनेकप्राकारिक** (aneka-prākārika) *adj.* having many ramparts अनेकप्राकारिकपुण्यक्षेत्रं प्रचलनशीलोऽपि दुःशीलः सुशीलनामा परमप्रियान् कश्चित्सदाशिवगणः ... पीडयति स्म ParamāKā. 153. 49 (16)

**अनेकप्राणिन्** (aneka-prāṇin) *m.* **A** various living beings or animals अनेकप्राणिकर्मफलोपभोगयोग्यानेकाधिष्ठानवल्लोकदेहनिर्माणेन लिङ्गेन ... आत्मा अवगम्यते AitUBh. 272. 14 (*on* 4. 0); सूना अनेकप्राणिप्राणवियोजनस्थानम् ManvaVi. 594. 22 (*on* 5. 13); **B** more than one animal एतेनैकपशुहिंसयानेकप्राणिनिस्तारात्तादृशदोषाभावः ManvaVi. 611. 27 (*on* 5. 39)

**अनेकप्राणिरूप** (anekaprāṇi-rūpa) *adj.* of the forms of various animals एते गणेशाः क्रीडन्ते ...। व्याघ्रेभवदनाः केचित् ... अनेकप्राणिरूपाश्च ज्वालास्याः MatsyaP. 154. 531.

**अनेकप्राणिवध** (anekaprāṇi-vadha) *n.* killing of more than one animal पश्वेकादशिन्यामप्येकेन पशुना सह विकल्पेनोपदिष्टायामनेकप्राणिवधे दोषोत्पत्तिः प्रसज्येत BālaKrī. ii. 110. 23 (*on* 3. 244 (? 250))

**अनेकप्राणिशत** (aneka-prāṇiśata) *n.* several hundreds of animals ते वेदविहितमनेकप्राणिशतवधारम्भभीषणं यज्ञविधिं सुवृष्टिहेतुं मन्यमानास्तस्मै संवर्णयामासुः JātaMā. 68. 13 (10.3(9))

**अनेकप्राणिसंभवा** (anekaprāṇi-sambhavā) *adj.* (*f.*) arising or originating from, i.e. pertaining to various animals तदा तस्मिन्महायज्ञे वाजिमेधे महायशाः। तथापि न गता हत्या ह्यनेकप्राणिसंभवा SkandP. v(2). 29. 18.

**अनेकप्राणिहत्या** (anekaprāṇi-hatyā) *f.* killing of various animals नरः शबरसंज्ञितः। नित्यं जन्तुवधोद्युक्तः ...। अनेकप्राणिहत्याकृत्यपरस्त्वनिरतः सदा PadmP. iv. 20. 47.

**अनेकप्राण्युपघात** (anekaprāṇy-upaghāta) *m.* destruction of various living beings प्रमादादुत्थितेऽग्नौ च दग्धमिति नाशः प्रकाश्यः। न तु स्वयमादीप्यः।

अनेकप्राण्युपघातदोषात् JayaMa. 326. 6 (*on* 6. 3)

**अनेकप्राण्युपद्रव** (anekaprāṇy-upadrava) *m.* harm or trouble to various living beings शूलप्रोतोऽपि गङ्गान्तः सूरिरेवमचिन्तयत्। अहो वपुर्ममानेकप्राण्युपद्रवकारणम् PariPar. 6. 166.

**अनेकप्राण्युपभोग** (anekaprāṇy-upabhoga) *m.* enjoyment for various living beings अग्नेः पृथिव्येव समित् पृथिव्या हि अयं लोकः अनेकप्राण्युपभोगसंपन्नया समिध्यते BṛĀraUBh. 772. 16 (*on* vi. 2. 11)

**अनेकप्रातिपदिक** (aneka-prātipadika) *n.* **A** more than one nominal stem एकैकप्रातिपदिकार्थनिरूपणमाकृत्यधिकरणे, अत्र त्वनेकप्रातिपदिकस्थसमानविभक्त्यर्थनिरूपणमिति भेदः ŚrutaPra.iB. 212. 18 (*on* i. 1. 13); **B** many nominal stems अनेकप्रातिपदिकस्थसमानविभक्तेर्विशेष्यैक्यपरत्वप्रतिपादकमरुणाधिकरणम् ŚrutaPra.iB. 214. 17 (*on* i. 1. 13)

**अनेकप्रातिपदिकार्थ** (anekaprātipadikārtha) *m.* meanings of many nominal stems शीतोष्णस्पर्शवन्तौ पयःपावकावित्यादौ त्वद्रीत्या संसर्गप्रतिपादकेऽनेकप्रातिपदिकार्थमात्रपरेऽतिव्याप्तिः Nyāyāmṛ. 434A. 10; AdvaiSi. 662. 11.

**अनेकप्राप्ति** (aneka-prāpti) *f.* **1A** possibility of more than one (word) अनेकप्राप्तावेकस्य नियमोऽनियमः शेषेषु Vār. 2 *on* P. ii. 2. 34; KāśiVr. *on* ii. 2. 32; PrakriKau. i. 624. 1; **1B** contingency of more than one option एकस्यानेक-प्राप्तावेकत्र नियमनं परिसंख्या AlankāSa. 153. 5; **2** obtainment of different (worlds) पाशुपतानां रुद्रलोकप्राप्तिः ... गाणपत्यानां तल्लोकप्राप्तिः, एवमनेकप्राप्तिरिति कृत्वा भेदस्यैव पारमार्थिकत्वं संभवति ŚankaVi. (Ā.) 252.3.

**अनेकप्राश्निकादिसमाज** (anekaprāśnikādi - samāja) *m.* assembly of many judges etc. अनेकप्राश्निकादिसमाजे कथितमवश्यं केनाप्यवगम्यते NyāyMañ. ii. 199. 4.

**अनेकप्रियनखपद** (aneka-priyanakhapada) *n.* many nail-marks of a lover यत्रानेकप्रियनखपदव्याजतो वारवामाः ...शशधरकलाचिह्नमङ्गे वहन्ति PavaDū. (Dh.) 29.

**अनेकप्रिया** (aneka-priyā) *adj. (f.)* (unchaste woman) loved by many उष्णाहाररतातितीव्रसुरतानेकप्रिया श्यामला। ... सा हस्तिनीति श्रुता ŚṛṅgāDī.2.6.

**अनेकप्रेयसी** (aneka-preyasī) *f.* beloved of more than one एक एव पतिर्लोके योषितामुपगीयते। अनेकप्रेयसीयं तु बन्धक्येव न संशयः PāṇḍaC. 6. 984.

**अनेकफण** (aneka-phaṇa) *adj.* having many hoods (तालद्रुमैः) प्रतिबिम्बितैश्च अनेकफणैर्भुजंगमैरिव भ्राजमानम् ... तडागमद्राक्षीत् (राजा) UdaySuKa. 129. 23.

**अनेकफल** (aneka-phala) *adj.* **A** having many fruits, i.e. results सर्वत्रगैरनुशयैः सहभुवो येऽप्यन्ये धर्मास्तेऽपि सर्वत्रगाः प्राप्तयस्तु नैवम्। अनेकफलत्वात् AbhidhKoBh. 287. 21 (*on* 5.13); **B** yielding various fruits i.e. results 'ओमित्येतदक्षरम्' इत्यादिना सामावयवविषयमुपासनमनेकफलमुपदिष्टम् ChāndoUBh. 83. 2 (*on* ii. 1. 0); **Ci** having more than one fruit, i.e. result नोपासनस्य निःश्रेयससाधनत्वमिति। नैतदेवम्, सकृत्प्रयुक्तस्यैकस्यैवानेकफलत्वोपपत्तेः NītiMā. 67. 1; **Cii** conveying more than one fruit, i.e. result प्रथमं संबन्धस्तेनैव विधेर्नैराकाङ्क्ष्यात्रानेकफलत्वकल्पना MayūMāli. 382. 21 (*on* iv. 3. 6)

**अनेकफल** (aneka-phala) *n.* **1Ai** many fruits, i.e. results (मन्त्रम्) अनेकदीप्तनयनमनेकफलभूषितम् ... अनेकमन्त्रकोटीभिस्संस्मरेत्सेवितं सदा JayāS. 21. 231; **1Aii** more than one fruit, i.e. result 'ऋद्धिकामास्सत्रमासीरन्' इत्यादौ ... एकसत्रप्रयोगादनेकफलनिष्पत्तौ ... एकमेव फलं सर्वैरवयवशो भुज्यते BhāṭṭDī. ii. 238. 4 (*on* vi. 2. 1); **1B** many fruits नास्ति मम शुद्धिर्महेश्वर। अनेकफलभक्तत्वाद्वानरस्तु शुचिः कथम् PadmP. iv. 110. 222; **2A** various fruits पूर्वेण मन्दरमनेकफलावलीभिर्युक्तं यवैः कनकमद्रकदम्बचिह्नैः। ... आकारयेत् MatsyaP. 83. 20; **2Bi** various fruits, i.e. advantages or profits आत्मनीनमुपतिष्ठते गुणाः संभवन्ति विरमन्ति चापदः। इत्यनेकफलभाजि मा स्म भूदर्थिता कथमिवार्यसंगमे Kirātā. 13. 69 (comm. नानाफलोत्पादके); **2Bii** various fruits, i.e. results कर्मन्। ... त्वं नित्यनैमित्तिककाम्यभेदात् स्थित्वा त्रिधानेकफलानि दत्से Jīvān. 296. 2; **2C** various objectives or purposes पुरमुच्यते शरीरम् ... इन्द्रियमनोबुद्धिविषयैः अनेकफलविज्ञानस्य उत्पादकैः पौरैरिव अधिष्ठितम् GītāBh. (Śaṅ.) 164. 16 (*on* 5. 13)

**अनेकफलकुसुमसमृद्ध** (anekaphalakusuma-samṛddha) *adj.* rich in various fruits and flowers हरिवाहनः ... सांप्रतमस्यैव दिव्यकाननस्यानेकफलकुसुमसमृद्धमुत्तरं भूभागमध्यास्ते TilaMañ. 225. 19;

**अनेकफलजनक** (anekaphala-janaka) *adj.* which produces various fruits, i.e. results न च काम्ययोस्तन्त्रानुष्ठानादनेकफलजनकत्वे योगसिद्धिन्यायविरोधः TristhaSe. 20. 19.

**अनेकफलजनन** (anekaphala-janana) *n.* production of various fruits, i.e. results राजसूयाधिकारविधिना स्वाराज्यफलकत्वावगमेऽपि ... योगसिध्य(?द्ध्य)धिकरणन्यायेन अनेकफलजननायोगात् ... अनुष्ठानं वेदितव्यम् MīmāKau. ii. 20. 2 (*on* ii. 3. 3)

**अनेकफलतात्पर्यक** (anekaphalatātparya-ka) *adj.* intended to convey various fruits, i.e. results सर्वेष्वेव वाक्येषु विषयभेदेन विषयैक्येन वा क्रमेण यौगपद्येन वा अनेकफलतात्पर्यकत्वेऽपि क्वचित्केनचिद्व्यवहारो मूले नानुपपन्नः MīmāKau. iii (1). 91. 3 (*on* i. 2. 44)

**अनेकफलदायक** (anekaphala-dāyaka) *adj.* bestowing various fruits, i.e. results (शूलः) ददर्श तत्र तल्लिङ्गमनेकफलदायकम् SkandP. v(2). 51. 27.

**अनेकफलपुष्पाढ्य** (anekaphalapuṣpāḍhya) *adj.* full of, i.e. rich in various fruits and flowers हरोऽपश्यत् ...। अनेकफलपुष्पाढ्यं कामकाननम् GaṇeP. i. 84. 6.

**अनेकफलमूलिनी** (aneka-phalamūlinī) *adj. (f.)* possessing various fruits and roots वसिष्ठः ... जीवयामास वै प्रजाः। अनेकफलमूलिन्यः (F. N.°नीः) औषधीश्च प्रवर्तयन् BrahmāṇḍP. ii. 8. 90.

**अनेकफलविषयक** (anekaphalaviṣaya-ka) *adj.* referring to various fruits, i.e. results न चानेकफलविषयकसमूहालम्बनात्मककामनावतः सर्वप्रयोगेष्वधिकारात् तेन कः प्रयोगः प्रथमतोऽनुष्ठेय इत्यत्र विनिगमनाविरह इति वाच्यम् LalitāSaBh. 201. 21 (*on* 237)

**अनेकफलसंकर** (anekaphala-saṅkara) *m.* intermixture or cross-connection of more than one fruit, i.e. result न ह्येकस्य वाक्यस्य प्राप्तिनियमपरिसंख्यास्वेकमेव फलमिति नियमः, अनेकफलसंकरस्य तत्र तत्र वाक्ये बहुशः प्रागुदाहृतत्वात् VidhiRa. 37 (191. 13)

**अनेकफलसाधन** (anekaphala-sādhana) *n.* means of various fruits, i.e. results अनेकफलसाधनानि च वैदिकानि कर्माणि ... बहुफलानि कृष्यादिवत् BṛĀraUBh. 677.9 (*on* iv. 5. 15); अनेकफलसाधनस्यापि ज्योतिष्टोमादेरभिसंधिविशेषेण फलं प्रति नियमस्य सर्वैरभ्युपगन्तव्यत्वात् ŚatDū. 64. 10.

**अनेकफलसिद्धि** (anekaphala-siddhi) *f.* accomplishment of more than one fruit, i.e. result प्रयोगविधिना प्रत्येकफलोद्देशेन प्रयोगविधानान्नैकस्मिन्प्रयोगेऽनेकफलसिद्धिः MayūMāli. 386. 23 (*on* iv. 3. 11)

**अनेकफलहेतुत्व** (anekaphalahetu-tva) *m.* the state of being the means of various fruits, i.e. results (सृङ्कां चेमामनेकरूपां गृहाण) गतिं कर्ममयीं गृहाण। अन्यदपि कर्मविज्ञानमनेकफलहेतुत्वात्स्वीकुरु KāṭhUBh. 111.14 (*on* 1. 16)

**अनेकफलार्थिन्** (anekaphalārth-in) *adj.* (used as noun) (one) desirous of various fruits, i.e. results येषु तूपासनेषु भिन्नानि भिन्नानि फलान्युच्यन्ते तत्र त्वनेकफलार्थिनस्तत्तत्फलकोपासनानि समुच्चीयेरन् AṇuBh. 266. 1 (*on* iii. 3. 60)

**अनेकफलोत्पत्ति** (anekaphalotpatti) *f.* origination of various fruits, i.e. results न च काम्यदर्शादेः सकृत्प्रयोगादेव स्वर्गादिफलपापक्षयादिहानेकफलोत्पत्तिरस्तु इति वाच्यम् MayūMāli. 386. 24 (*on* iv. 3. 11)

**अनेकफेन** (aneka-phena) *adj.* having much foam कमलिनीपलाशमनेकफेनहिरण्मणिहरितमम्बरतलमाचेमे AvantiKa. 68. 23.

**अनेकबन्ध** (aneka-bandha) *adj.* having various bonds, i.e. means or weapons ज्वलत्यमुष्मिन्कुपिते महीपतावनेकबन्धानि विभावसाविव। श्रिये जनानां ननृतू रणे तथा वने कबन्धानि विभावसाविव RāghPāṇ. (Dha.) 6. 33 (comm. नानाविधकरणानि)

**अनेकबलवर्ग** (aneka-balavarga) *adj.* possessed of various regiments of army राजा ... बाह्यकोपशङ्कायां वा पुत्रदारमेषामभ्यन्तरावग्रहं कृत्वा शून्यपालमनेकबलवर्गमनेकमुख्यं च स्थापयित्वा यायात् ArthŚā. iii. 61. 1 (9. 3) (comm. मौलभृतादिनानाजातीयसैन्यवर्गयुक्तम्)

**अनेकबलसंघात** (aneka-balasaṅghāta) *m.* many aggregates, i.e. regiments of army सेनापतिषु यं कंचिदग्रे प्रस्थापयाद्युना। अनेकबलसंघातसहितं घोरदर्शनम् BrahmāṇḍP. iii. 21. 98.

**अनेकबलसमावेश** (anekabala-samāveśa) *m.* incorporation of many (figures of) regiments दृष्टश्च चित्रादावनेकबलसमावेशः NyāyMañ. ii. 112. 23.

**अनेकबहुलोहविशेषक** (aneka-bahulohaviśeṣaka) *m., n.* much quantity of special kind of metal which is variously used सिंहासनम् ...। रत्नैरनेकबहुलोहविशेषकैश्च कुर्यान्मनोहरतरम् MānaSā. 47. 16.

**अनेकबाणनिर्भिन्न** (anekabāṇa-nirbhinna) *adj.* pierced with many arrows (लवः) अनेकबाणनिर्भिन्नक्षतरक्तकलेवरः। शुशुभे रणमध्यस्थः किंशुकश्चेव पुष्पितः PadmP. iv. 62. 25.

**अनेकबाणव्यथित** (anekabāṇa-vyathita) *adj.* pained or troubled by

many arrows अनेकबाणव्यथितः सुग्रीवः समराङ्गणे। जग्राह पर्वतं घोरम् PadmP. iv. 64. 25.

**अनेकबाणसंविग्न** (anekabāṇa-saṁvigna) *adj.* terrified by many arrows अनेकबाणसंविग्नान् कुर्वन् वीरान् सहस्रशः। ... ययौ रुक्माङ्गदो बली PadmP. iv. 41.6.

**अनेकबाणसाहस्र** (aneka-bāṇasāhasra) *n.* many thousands of arrows अनेकबाणसाहस्रैर्निजघान नृपं बली PadmP. iv. 52. 39.

**अनेकबाध** (aneka-bādha) *m.* A contradiction to more than one, i.e. both (the views) ननूभयत्रापि निषेधः प्रवर्ततां, न, अनेकबाधस्यान्याय्यत्वात्। तस्मात् मघाश्राद्धमपि सपिण्डमाचरणीयम् CaturCin. iii (2). 563. 14; B contradiction to many (statements) उक्तं नारायणाधिष्ठितमिति च तमोऽनेकबाधोऽन्यथा स्यात् TattvMu. 3. 6 (comm. अनभ्युपगमे बहुश्रुतिस्मृतीतिहासादिबाधः स्यात्)

**अनेकबान्धव** (aneka-bāndhava) *m.* many relatives, i.e. forefathers आप्यायिता वत्स तेन चानेकबान्धवाः। श्राद्धं कर्तुमशक्तिश्चेच्छाकैरपि हि जायते SkandP. iii (2). 7. 96.

**अनेकबालक्रीडा** (aneka-bālakrīḍā) *f.* A various sports of children हरिवंशकथेवानेकबालक्रीडारमणीया ... उज्जयिनी नाम नगरी Kād.52.7; रामकृष्णौ व्यवर्धेतां गोकुले बालकौ तदा। अनेकबालक्रीडाभिश्चिक्रीडतुररिंदमौ SkandP. iii (1).27.66; B (description of) various juvenile sports (of Kṛṣṇa), Kād.52.7.

**अनेकबालचरितचापल** (aneka-bālacaritacāpala) *n.* various follies or rash acts of youth अतिदक्षिणः खलु देवो हर्षो यदेवमनेकबालचरितचापलोपचितकौलीनकोपितोऽपि मनसा स्निह्यत्येव मयि HarṣaC. 126. 11.

**अनेकबाहु** (aneka-bāhu) *adj.* having many arms अपश्यत्पुरुषं योगयुक्तं पीताम्बरं लुब्धकोऽनेकबाहुम् MahāBhā. xvi. 5. 20; दुष्टौ ... युद्धाभिलाषिणौ। ततो मायात्मकेनैव वपुषानेकबाहुना। ... योधितौ तौ तदा मया JayāS. 2. 69.

**अनेकबाहूदरवक्त्रनेत्र** (aneka-bāhūdaravaktranetra) *adj.* having many arms, bellies, mouths and eyes अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा सर्वतोऽनन्तरूपम् MahāBhā. vi. 33. 16=BhagGī. 11. 16; GītāBh. (Śaṅ.) 308. 18 (*on* 11. 16); अनेकबाहूदरचक्र(?क्त्र)नेत्रः ...। उवाच ... सुरेशः VarāP. 10. 5.

**अनेकबाहूरुधर** (anekabāhūru-dhara) *adj.* possessing more than one arm and thigh अनेकबाहूरुधरं नैकवक्त्रम् ...। प्रपश्याम्यहमीशानं सुप्तमेकार्णवे प्रभुम् SkandP. v (3). 19. 26.

**अनेकबिन्दुसमाहार** (anekabindu-samāhāra) *m.* collection of many drops (of water) यत् स्थूलं तदवयवोपचयपूर्वकं यथानेकबिन्दुसमाहाररूपो जलसंघातः PramāVāBh. 41. 19.

**अनेकबीज** (aneka-bīja) *adj.* having many seeds बहुबीजमबीजं च विकारि च विवर्जयेत्। (शाकम्) बहुबीजमित्यनेकबीजम् NirṇaSi. 82. 17.

**अनेकबीज** (aneka-bīja) *n.* various seeds or grains मृण्मयेष्वथवा वैणवेषु पात्रेषु पूरयेत्। अनेकबीजसंयुक्तं तोयं पुष्पोपशोभितम् NāraS. 23. 4; VīraMi. (Saṁskāra.) 264. 9.

**अनेकबुद्धि** (aneka-buddhi) *f.* cognition of more than one एकानेकबुद्धी भिन्नविषये विशेषवत्त्वाद्रूपादिविषयबुद्धिवत् NyāyVār. 243. 8 (*on* ii. 1. 33); कथमेकस्मिन्नात्मन्यनेकबुद्धिः DīpKa. 88. 2 (*on* 3. 144)

**अनेकबुद्धिविषयता** (anekabuddiviṣaya-tā) *f.* the state of being what is the object of cognition of more than one (person) अत्रापि चतुर्विधस्थूलशरीरं एकानेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः वृक्षवज्जलवद्वा व्यष्टिरपि भवति VedāntSā. (Sa.) 15. 17.

**अनेकबुद्धिव्यतिक्रम** (anekabuddhi-vyatikrama) *m.* violation, i.e. disappearance of the cognition of more than one एकवर्णग्रहणकाले चानेकबुद्धिव्यतिक्रमात् क्षणिकत्वाद् बुद्धीनां क्षणस्यैकपरमाणुव्यतिक्रमकालत्वात् PramāVāSvopVṛ. 80. 2.

**अनेकबुद्ध्यादिमयत्व** (anekabuddhyādimaya-tva) *n.* the state of being made of more than one intellect etc. शास्त्रम् ... ब्रह्मण एवाविकृतस्य सतोऽस्यैकस्यानेकबुद्ध्यादिमयत्वं दर्शयति BrahmSūBh. (Śaṅ.) 449. 11 (*on* ii. 3. 17)

**अनेकबोधविषयत्व** (anekabodhaviṣaya-tva) *n.* the state of referring to more than one congnition सत्यपि कर्मत्वैक्ये तद्बोधैक्ये वा कर्मत्वपर्याप्त्यधिकरणानामनेकबोधविषयत्वेन तद्भङ्गावश्यंभावात् MīmāKau. ii. 181. 8 (*on* iii. 1. 14)

**अनेकब्रह्माण्डकोटिघटना** (anekabrahmāṇḍakoṭi-ghaṭanā) *f.* creation of many crores of universes यस्य ... गुणाः ... अनेकब्रह्माण्डकोटिघटनामुपमर्थयमाना इव भगवतो विश्वसृजः ... कर्णलग्नाः स्वर्गलोकमधिवसन्ति स्म NalaCam. 1. 33 (18)

**अनेकब्रह्माण्डनायक** (anekabrahmāṇḍa-nāyaka) *m.* leader of many universes सर्वव्यापी पूर्णकामोऽनेकब्रह्माण्डनायकः। ... त्वम् GaṇeP. ii. 8. 34.

**अनेकब्रह्माण्डहेतु** (anekabrahmāṇḍa-hetu) *m.* cause of many universes त्वम् ... अनेकब्रह्माण्डहेतुः परमप्रकाशः GaṇeP. ii. 48. 11.

**अनेकब्राह्मणजनसहस्र** (aneka-brāhmaṇajanasahasra) *n.* many thousands of Brahmin-folks अयं खलु तावत् संवेशनोत्थापनयोरनेकब्राह्मणजनसहस्रप्रयुक्तपुण्याहशब्दरवो रयुः Prati. 3. 7 (6)

**अनेकब्राह्मणनिमन्त्रण** (anekabrāhmaṇa-nimantraṇa) *n.* invitation to more than one Brahmin पित्रादीनां त्रयाणामेकैकस्यानेकब्राह्मणनिमन्त्रणेऽपि त्रीण्येवार्घ्यपात्राणि न तु ब्राह्मणसंख्यया BālamBha. i. 514. 31 (*on* 1. 234-235)

**अनेकब्राह्मणवत्** (anekabrāhmaṇa-va(n)t) *adj.* having, i.e. inhabited by many Brahmins सत्स्वप्यन्येषु ब्राह्मणवत्सु ग्रामेषु योऽनेकब्राह्मणवान् सोऽभिधीयते ब्राह्मणवानिति SaṅkarKāBh. 109. 18 (*on* ii. 4. 30)

**अनेकब्राह्मणवध** (anekabrāhmaṇa-vadha) *m.* killing of many Brahmins युगपत्कामतो वाकामतो वानेकब्राह्मणवधे विशेष उक्तो भविष्यत्पुराणे Aparā. 1056. 25 (*on* 3. 243); BālamBha. iii. 144. 1 (*on* 3. 252)

**अनेकब्राह्मणहनन** (anekabrāhmaṇa-hanana) *n.* killing of many Brahmins गृहदाहादिना युगपदनेकब्राह्मणहनने तु भविष्यपुराणीयो विशेषः ManvaMu. 468. 4 (*on* 11. 86)

**अनेकब्राह्मणाद्यलाभ** (anekabrāhmaṇādy-alābha) *m.* non-availability of more the one Brahmin etc. भोजयेदथवाप्येकं ब्राह्मणं पङ्क्तिपावनम्। इति तदेतदनेकब्राह्मणाद्यलाभविषयम् SmṛtiCan. v. 194. 13.

**अनेकब्राह्मणाधिष्ठान** (anekabrāhmaṇādhiṣṭhāna) *adj.* existing or present in many Brahmins सकृदावाहनेनैवानेकब्राह्मणाधिष्ठानदेवताध्याससंभवात् SmṛtiCan. v. 289. 17.

**अनेकब्राह्मणाधिष्ठान** (anekabrāhmaṇādhiṣṭhāna) *n.* location, i.e. presence of many Brahmins सकृदावाहनेनैवानेकब्राह्मणाधिष्ठाने देवताध्याससंभवात् VīraMi. (Śrāddha.) 204. 2.

**अनेकभक्तजन** (aneka-bhaktajana) *m.* several devoted people तत्सेवार्थं ब्राह्मणादीन् अनेकभक्तजनान् संपाद्य ... परमगुरुः सुखमास ŚaṅkaVi. (Ā.) 251.12.

**अनेकभक्ताभयद** (anekabhaktābhaya-da) *adj.* bestowing security or protection to many devotees नमामि ते नाथ करारविन्दम् ...। अनेकभक्ताभयदम् GaṇeP. ii. 53. 30.

**अनेकभक्ति** (aneka-bhakti) *f.* various decorations (राक्षसाधिपः) सर्वर्तुकुसुमव्याप्तराजमार्गविराजिताम्। अनेकभक्तिभिः पञ्चवर्णैश्चूर्णैरलंकृताम्। ... प्रविष्टः ... लङ्काम् PadmP. (Ra.) 12. 367; कन्दुकमनेकभक्त्या चित्रं कालेश्च सान्तरं दृग्भिः (बहुभिः)। ... दृष्ट्याध्वनि योजयेदस्याः KandaCū. iii. 3. 7 (Add. 12)

**अनेकभक्तिका** (aneka-bhaktikā) *f.* various decorations वंशादिशिखरे रम्ये ... । सर्जिता परमा भूमिः ...। दशार्धवर्णरजसा कल्पितानेकभक्तिका PadmP. (Ra.) 40. 7.

**अनेकभक्तिचित्र** (anekabhakti-citra) *adj.* possessing pictures with various decorations कन्दुकमनेकभक्तिचित्रम् ... संदर्शयेत् KāmSū. 210. 14 (3. 3)

**अनेकभगण** (aneka-bhagaṇa) *m.* many groups of stars or asterisms दृढकुदिनानां चक्रविकलाधिकत्वे तु स एव विकलात्मको ग्रहः अनेकभगणशेषविकलावशेषाभ्यामपि संभवति SiddhāTaVi. (ŚeṣaVā.) 48. 23.

**अनेकभङ्ग** (aneka-bhaṅga) *m.* 1 various bends राजा ... कामिनीकुचकुम्भभित्तिष्वनेकभङ्गकुटिलाः पत्राङ्गुलीरकल्पयत् TilaMañ. 18. 3; 2 many waves संसार इवातिदूरपारेऽस्मिन्महाकान्तारे सारभूतं धर्मतत्त्वमिवानेकभङ्गगम्भीरं सरो दृष्टम् TilaMañ. 220. 2; 3 various views, TilaMañ. 220. 2.

**अनेकभङ्गरचित** (anekabhaṅga-racita) *adj.* constructed with various bends (भूमिपतिः) अनेकभङ्गरचितरङ्गावलीतरङ्गितमसृणमणिकुट्टिमोत्सङ्गम् ... आस्थानमण्डप-मगच्छत् TilaMañ. 70. 10.

**अनेकभङ्गिन्** (aneka-bhaṅgin) *adj.* 1 having various circumlocutory or round-about ways (of speaking) अनेकभङ्गिभिः ... क्षुद्रप्रव्रजिताभिरभिलषितवस्त्वनुगुणैर्वचोभिराश्वास्यमानपरिजनम् ... राजकुलमव्रजत् (पार्थिवः) TilaMañ. 64. 5; 2 having various models or types तालैः शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे ... नीलकण्ठः ... अत्र तालैरिति बहुवचनमनेकभङ्गिवैदग्ध्यं ख्यापयद् विप्रलम्भमुद्दीपयति Kāvyānu. (He.) 65. 4.

**अनेकभङ्गिविकारपूर्णा** (anekabhaṅgivikāra-pūrṇā) *adj.* (*f.*) full of various ... अनेकभङ्गिविकारपूर्णे दुःखमकारणायासितहृदया जीवसि Kād. 85. 2.

**अनेकभजन** (aneka-bhajana) *n.* worship of or devotion to many (deities) असम्यक्त्वं तु मन्त्राणाम् ... अज्ञानादनेकभजनादपि TantrRā. 35. 72.

**अनेकभटपाणितल** (anekabhaṭa-pāṇitala) *n.* palms of many warriors or soldiers असियष्टिष्वनेकभटपाणितलस्थितासु।' ... कालमुसल: ...। वाक्यं निरर्गलमुदाहरत् HarVi. 8. 2.

**अनेकभटरक्षित** (anekabhaṭa-rakṣita) *adj.* guarded by many warriors or soldiers पण्डित:। गोपुरं च समासीददनेकभटरक्षितम् PadmP. (Ra.) 33. 191.

**अनेकभटश्रेणि** (aneka-bhaṭaśreṇi) *f.* many series of warriors or soldiers ते ... अनेकभटश्रेणिविसंकटम्। ... पाण्डवेयानां स्कन्धावारमुपागमन् PāṇḍaC. 13. 969.

**अनेकभटसंघात** (anekabhaṭa-saṅghāta) *m.* group of many warriors or soldiers धीसख: ... प्रभुं नत्वा ...। प्रादात् ...। चञ्चच्चतुरङ्कांश्चापि स्वर्विमानोपमद्युतीन्। अनेकभटसंघातसंकीर्णीकृतपर्वतान् PrabhāC. 204. 9.

**अनेकभटसाहस्र** (aneka-bhaṭasāhasra) *n.* many thousands of warriors or soldiers हयो गतो हेमकूटम् ...। अनेकभटसाहस्रै रक्षितो बद्धचामर: PadmP. iv. 47. 1.

**अनेकभटोद्भट** (anekabhaṭodbhaṭa) *adj.* excellent due to number of warriors or soldiers तदनेकभटोद्भटं बलं क्षुभितस्यापि लिपि पयोनिधे: VikraDeC.15.8.

**अनेकभद्रास्पद** (anekabhadrāspada) *n.* abode of many auspicious things, i.e. successes अनेकभद्रास्पदमेष जात: शुभालयस्तत्क्षणसिद्धसाध्य: VīraBhā. 5.134.

**अनेकभयकारक** (anekabhaya-kāraka) *adj.* causing various types of fear वैधव्यदायकं स्त्रीणामनेकभयकारकम्। कार्यमुत्तरयाम्याभ्यां शालाभ्यां भयदं नृणाम् MatsyaP. 254. 13.

**अनेकभयद** (anekabhaya-da) *adj.* causing various types of fear मानहीनादिकं कुण्डमनेकभयदं भवेत्। यस्मात्तस्मात्सुसंपूर्णं शान्तिकुण्डं विधीयते MatsyaP. 93. 91; BhaviP. 817B. 7 (iv. 141. 92)

**अनेकभयदायक** (anekabhaya-dāyaka) *adj.* causing various types of fear वैधव्यदायकं स्त्रीणामनेकभयकारकम् (v.l. ॰दायकम्)। कार्यमुत्तरयाम्याभ्यां शालाभ्यां भयदं नृणाम् MatsyaP. 254. 13.

**अनेकभवनप्रकार** (anekabhavana-prakāra) *m.* manner of becoming more than one एकमेव कथमनेकं भवतीति यत्तूक्तं तत्र प्रश्ने एकस्यानेकभवनप्रकार उच्यते Bhāsk. ii. 37. 16 (*on* ii. 2. 2)

**अनेकभवपरंपरा** (anekabhava-paramparā) *f.* succession of many births or (worldly) existences अनेकभवपरंपरालक्षणेन दीर्घकालेन भाव्यमानस्य संकल्पारूढत्वं संभाव्यते TarkBhā. (Mo.) 34. 11.

**अनेकभवपूर्विका** (anekabhava-pūrvikā) *adj.* (*f.*) preceded by, i.e. connected with more than one birth इदं चित्तं विचित्रीकृतमिव सर्वतो मत्स्यजालं ग्रन्थिभिरिवाततमित्येता अनेकभवपूर्विका वासना: YogBh. 71. 3 (*on* 2. 13)

**अनेकभवप्राप्ति** (anekabhava-prāpti) *f.* attainment in many births तेनानेकभवप्राप्तिसंबन्धेनास्य भूपते:। बभूव परमप्रीतिर्मधुरां प्रति पार्थिव PadmP. (Ra.) 91. 44.

**अनेकभवसंचित** (anekabhava-sañcita) *adj.* [*f.* - ā] accumulated through many births अनेकभवसंचिता इह हि कर्मणा निर्मिता:। प्रियाप्रियवियोगसंयोगसंगमविपत्तिसंपत्तय: SubhāRaSaṁ. 255; पुराणश्रवणादेव अनेकभवसंचितम्। पापं प्रशममायाति SkandP. vi. 279. 19; vii (4). 44. 20.

**अनेकभवसंभूत** (anekabhava-sambhūta) *adj.* arisen or accumulated through many births अनेकभवसंभूतकर्मपङ्काङ्कितो बुधै:। आत्मा सद्वासनातोयै: प्रक्षाल्यो नियतेन्द्रियै: MārkP.95.12; अनेकभवसंभूतात्कल्मषादखिलादपि। मुच्यतेऽसौ न संदेहो यद्यपि ब्रह्मघातक: SkandP. i(2). 42. 17; iv. 33. 108.

**अनेकभवसाध्य** (anekabhava-sādhya) *adj.* to be accomplished or attained during many births अनेकभवसाध्यस्य समाधेर्न क्षतिरस्तीत्याश्वासोत्पादनाय ... आह RājMār. 65. 9.

**अनेकभवानुग** (anekabhavānuga) *adj.* continuing for many births जन्तूनां मोहिनां तेषां यदनेकभवानुगम्। दु:खं संजायते कस्तद्वक्तुं शक्नोति PadmP.(Ra.) 17.182.

**अनेकभवोत्पन्न** (anekabhavotpanna) *adj.* originated, i.e. committed through many births संदृष्टो भार्गवश्चायं साक्षाद्विष्णुस्वरूपधृक्। तेनानेकभवोत्पन्नं पातकं नाशमागतम् BrahmāṇḍP. ii. 35. 33.

**अनेकभागत्व** (anekabhāga-tva) *n.* the state of having many parts, i.e. divisions (साम्न:) न चैवमपि सौभरस्यानेकभागत्वान्निधनस्यैवाश्रयत्वे प्रमाणाभाव: MīmāKau. iii (2). 295. 9 (*on* ii. 2. 27)

**अनेकभागात्मक** (anekabhāgātma-ka) *adj.* A of the nature of many parts, i.e. aspects 'मन्दं मन्दं नुदति पवन:' ... अनेकभागात्मकस्य नुदेर्यदा सर्वे भागा मन्दत्वेन व्याप्तुमिष्टा भवन्ति तदा वीप्सा KāvyālanSū. v. 2. 87; B of the form of more than one part एकमेव सदनेकभागात्मकमव्यक्ताख्यमुपादानमिति चेन्न, विकल्पासहत्वात् NyāySiA. 190. 16.

**अनेकभाज्** (aneka-bhāj) *adj.* pertaining or leading to many (objects) दोष: साधारण: प्रातिस्विकोऽर्थस्य स तु द्विधा। अनेकभागुपालम्भ: साधारण इति स्मृत: AgniP. 346. 13.

**अनेकभाजनगत** (anekabhājana-gata) *adj.* pertaining to, i.e. kept in more than one vessel यदनेकवृत्ति तदनेकं यथानेकभाजनगततालफलानि NyāyKa. 43. 5.

**अनेकभारद्वाजम्** (anekabhāradvājam) *adv.* [SiddhaHe. iii. 2. 5] among many Bhāradvājas सुगूर्जरं हेतुरनेकभारद्वाजं वरो गीतगुणस्त्रिगङ्गम्। ... स्वरीशितु: पुत्र इवेष रेजे DvyāśraKā. 6. 7(comm. भारद्वाजा हि ... धर्मगुरव: ...। तेषु धर्मगुरुषु ... श्रेष्ठ:)

**अनेकभार्य** (aneka-bhārya) *adj.* (used as noun) A (one) having many wives अनेकभार्यं प्रत्याह Mitā. 29. 27 (*on* 1. 88); सर्वाधाने वानेकभार्यस्य पूर्वं ज्येष्ठामरणे तत्राग्नीनुत्सृज्य पुनर्द्वितीयया सहाधानम् SmṛtiCan. ii. 443. 11; अनेकभार्यस्यर्तुयौगपद्ये ... कश्यप: NirnaSi. 175. 4; B (one) who has more than one wife अनेकभार्यस्यैकभार्यस्य च साधारण्येन दोष उक्त: BālamBha. i. 265. 21 (*on* 1. 89)

**अनेकभार्या** (aneka-bhāryā) *f.* many wives यद्याहु: - 'अपरित्यागोऽत्राव्यभिचार: इतरथा स्त्रीवत्पुरुषस्यानेका(?क)भार्यापरिणयनं न स्यात्' तदयुक्तम् ManuBh. ii. 271. 18 (*on* 9. 101)

**अनेकभाव** (aneka-bhāva) *m.* 1A existence or presence of many (hymns) अन्त्ये निविदं दध्यादनेकभावे सूक्तानाम् ĀśvaŚS. II. i. 11. 26; 1B existence or presence of more than one (cause) तद्यानेकभाव एव भावात् तत्कार्यमुच्यते तस्य कुतोऽनेकताप्रसङ्ग: HetuBiṬ. 93. 12; 2 the state of being more than one एकोऽपि सन् विद्वान् ऐश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति BrahmSūBh. (Śaṅ.) 856. 15 (*on* iv. 4. 15); LaCandr. 816. 19; प्रहर्तां चैकानेकभावादुत्तमादिभेदाद्यानेकविध: DaṇḍaVi. 219. 17; 3 various sentiments अनेकभावचतुरं शृङ्गाररम्यं वच: ŚatTrayī. 489; 4 many (positive) entities यद्यप्यनेकत्वमभावेऽप्यस्ति, तथाप्यनेकत्वे सति भावत्वं पक्षानां साधर्म्यम्। तथा चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितार्थ: SiddhāMu. 8. 1 (*on* 14)

**अनेकभावनानुविद्धा** (anekabhāvanānuviddhā) *adj.* (*f.*) 1 full of various sentiments मीमांसयेवानेकभावनानुविद्धया गीत्या देवं विरूपाक्षमुपवीणयन्तीम् ... कन्यकां ददर्श Kād. 131. 8; 2 related to different productive activities, Kād. 131 . 8 (comm. यागादिप्रवृत्त्यनुकूला व्यापारार्थरूपा)

**अनेकभावनाविधान** (anekabhāvanā-vidhāna) *n.* injunction or prescription of many productive activities न तु फलवाक्य एवानेकभावनाविधानम्, इतरैस्तु एकैकभावनानुवादेन तत्तद्गुणार्थविधि: MīmāKau. iii (2). 141. 14 (*on* ii. 2. 1)

**अनेकभावसंयुक्त** (anekabhāva-saṁyukta) *adj.* consisting of various sentiments दिव्यभावपरीतं यच्छृङ्गाराद्भुतयोजितम्। अनेकभावसंयुक्तमुदारत्वं प्रकीर्तितम् NāṭyaŚā. 16. 110.

**अनेकभावा** (aneka-bhāvā) *adj.* (*f.*) of the nature of many kinds or types तस्मादनेकभावाभि: शक्तिभिस्तदभेदत:। एक एव स्थित: शक्त: शिव एव तथा तथा ŚivDr. 4. 5 (comm. अनेकघटपटस्वभावाभि:)

**अनेकभावापत्ति** (anekabhāvāpatti) *f.* undesired contingency of many entities चक्षुरादिनानात्वेनानेकभावापत्ते: संभवात् LaCandr. 816. 20.

**अनेकभावाभावज्ञान** (anekabhāvābhāva-jñāna) *n.* experience of many positive and negative entities, i.e. being and non-being अनेकभावाभावज्ञानसंस्कारसंस्कृताया मेचकधिय: स्मृतिबीजप्रबोधकौचित्यात् किंचिदेव स्मृतिर्विमृशति ParāTri. 4.8.

**अनेकभाष** (aneka-bhāṣa) *adj.* consisting of different languages प्रश्नोत्तरं तदेतद् व्यस्तसमस्तादिभिर्भवेद् बहुधा। भेदैरनेकभाषम् ... भिद्यते Kāvyālan. (Ru.) 5. 27.

**अनेकभाषा** (aneka-bhāṣā) *f.* more than one language वाक्यं यत्रैकस्मिन्ननेकभाषानिबन्धनं क्रियते। अयमपरो विद्वद्भिर्भाषाश्लेषोऽत्र विज्ञेय: Kāvyālan. (Ru.) 4. 16.

**अनेकभाषाभेद** (aneka-bhāṣābheda) *m.* many varieties of languages परं युगादौ प्रथमपुरुषेण ... द्विपञ्चाशदक्षरप्रमाणा मातृकैवोपदिष्टा। ... ततो ... संस्कारे कृते संस्कृतं जातम्। ततश्चानेकभाषाभेदा

अभूवन् KumāPraPra. 103. 27.

**अनेकभाषाव्यामिश्ररूप** (anekabhāṣāvyāmiśra-rūpa) *adj.* of the nature of being mixed with different languages अभिनेयार्थं दशरूपकम् ... अनेकभाषाव्यामिश्ररूपम् Loc. 141. 25 (*on* 3. 7)

**अनेकभिन्नसंख्याक्षरप्रकृति** (anekabhinnasaṅkhyākṣara-prakṛti) *adj.* of the nature of many different numbers and letters सरस्वती ... अनेकभिन्नसंख्याक्षरप्रकृतिरप्रकृतिव्यवस्था HarVi. 47. 131.

**अनेकभुक्ता** (aneka-bhuktā) *adj. (f.)* **A** enjoyed by many संपदा पुनरनेकभुक्तया वेश्ययेव न वशी वशीकृतः Surath. 1.94; **B** enjoyed (sexually) by many (men). Surath. 1.94.

**अनेकभुजपरिघ** (aneka-bhujaparigha) *m.* numerous arms resembling iron-bars अये, कोऽयमनेकभुजपरिघभीषणाकारो राक्षसः UnmaRā. (Vi.) 64 (3)

**अनेकभुजसंयुक्त** (anekabhuja - saṁyukta) *adj.* possessing numerous arms ध्यायेद् वा विश्वरूपिणम्। ... अनेकभुजसंयुक्तम् ... देवम् TriBrU.153.

**अनेकभूत** (aneka - bhūta) *n.* **1Ai** more than one element अवयविवादिनामपि ... अनेकभूतानामेकसंघातानुप्रवेशोऽवर्जनीयः NyāySiA. 207. 22;**1Aii** many elements संघातोऽनेकभूतैरपि भवति यथा ह्येकभूतस्य भागैः TattvMu. 1. 23; अनेकभूतेष्वनेकचैतन्यशक्तिकल्पनायां गौरवेण लाघवादेकस्यैव नित्यचित्स्वरूपस्य कल्पनौचित्यात् SāṁkhyaPraBh. 93. 32 (*on* 3. 22); **1B** various elements भूम्यादिभूतानां स्वत एव मिश्रत्वान्नैकभूतत्वं मांसादीनां संभवतीति विज्ञायते। तस्मात् संभूतत्वान् मांसादीनामनेकभूतकार्यत्वात् TattvPrakā. 135A. 2 (*on* ii. 4. 22); **2** various creatures or beings अनेकभूतभौतिकदेवतिर्यङ्मनुष्यानेकलोकाद्भुतरचनायुक्तब्रह्माण्डकोटिरूपस्य ... अनायासेनोत्पत्तिस्थितिभङ्गकरणं न लौकिकम् AṇuBh. 10.5 (*on* i. 1. 2)

**अनेकभूतप्रकृति** (anekabhūta-prakṛti) *adj.* having various elements as the material causes इदमनेकभूतप्रकृति शरीरमगन्धमरसमरूपमस्पर्शं च प्रकृत्यनुविधानात् स्यात्। न त्विदमित्थंभूतम् NyāyBh. 174. 14 (*on* iii. 1. 28-30)

**अनेकभूतप्रकृतित्व** (anekabhūtaprakṛti-tva) *n.* the state of having various elements as the (material) causes शरीरस्यानेकभूतप्रकृतित्वेऽपि न विशेषोक्तिविरोधः TattvPrakā. 135A. 4 (*on* ii. 4. 22)

**अनेकभूतसंसर्ग** (anekabhūta-saṁsarga) *m.* combination of various elements किं 'पृथिवीमय आपोमयः' इत्यादिवाक्यं युगपदनेकभूतसंसर्गं दर्शयति ŚrutaPra. ii. 597. 13 (*on* iv. 2. 5)

**अनेकभूतौघ** (anekabhūtaugha) *m.* flow, i.e. multitude of various creatures or beings नमोऽस्तु ते देवि समुद्रगामिनि ... अनेकभूतौघसमाश्रितेऽनघे SkandP. v(3). 12.4; नमामि ते ... सरिद्वरे ...। अनेकभूतौघसुसेविताङ्गे SkandP. v(3). 60. 27.

**अनेकभूदेवनिकेतन** (anekabhūdeva-niketana) *n.* abode of number of Brahmins (*lit.* divinities on earth) अनेकभूदेवनिकेतनानां संरक्षणं यत्कृतमादरेण। गङ्गावतीसूनुरगादुदारं तेन ध्रुवं मन्दिरदानधर्मम् Rāṣṭrau. 20. 47.

**अनेकभूपाल** (aneka-bhūpāla) *m.* many kings श्रीपार्श्वोऽथ ... प्रतस्थेऽनेकभूपालैः PārśvC. 5. 195.

**अनेकभूपालचक्रवाल** (anekabhūpāla-cakravāla) *n.* circle or group of many kings अनेकभूपालचक्रवालपरिवृतः श्रीकुमारपालभूपालः ... गृहस्थानामुचितामहोरात्रिकीं क्रियामपृच्छत् KumāPraPra. 85. 30.

**अनेकभूपालजित्वर** (anekabhūpāla-jitvara) *adj.* [P. iii. 2. 163] conquering many kings कुमारपालः ...। प्रतापाक्रान्तदिक्चक्रोऽनेकभूपालजित्वरः। भविष्यति PrabhāC. 196. 1.

**अनेकभूपालमौलि** (anekabhūpāla-mauli) *m.* head or crown of many kings अभूदनेकभूपालमौलिलालितशासनः। ... क्षितीश्वरः KathāKau. 2. 1.

**अनेकभूमन्** (aneka-bhūman) *adj.* having many floors or storeys शालाजातिः ...। नानाकाराङ्गान्वितानेकभूमा माला छन्दा स्यात् तु सा मालिकाख्या MayaMa. 26. 100.

**अनेकभूमि** (aneka-bhūmi) *adj.* having various regions कर्मस्थितिं जन्तुरनेकभूमिं नयत्यमुं सा च परस्परस्य Viṣāpahā. 12.

**अनेकभूमि** (aneka-bhūmi) *f.* many storeys रतिसुखसंपत्तिप्रतिकूजा अनेकभूमयो योजिताः। एवंविधं मण्डलं द्वादशद्वारयुतम् SāmaraU. 272. 7.

**अनेकभूमिका** (aneka-bhūmikā) *f.* **1** many storeys अस्ति ... अनेकभूमिकाभ्राजिष्णुभिः सौधैः ... संवलिता ... अयोध्येति यथार्थाभिधाना नगरी TilaMañ. 8. 21; शैलूष इवानेकभूमिकाभाजि ... धाम्नि ... निविष्टाम्... दमयन्तीमद्राक्षम् NalaCam. 7. 19 (3); **2** (enacting of) many roles or characters (in drama). NalaCam. 7. 19 (3) (comm. भूमिका ... वेषधारणम्)

**अनेकभूमिपाल** (aneka-bhūmipāla) *m.* many kings सः ... द्वीपान्तरागतानेकभूमिपालमौलिमालालालितचरणयुगलः Kād. 7. 2.

**अनेकभूमिप्रासादा** (anekabhūmi-prāsādā) *adj. (f.)* having multi - storeyed mansions अयोध्या सा परा मेध्या पुरी दुष्कृतिदुर्लभा। ... अनेकभूमिप्रासादा SkandP. ii (8) .1. 33; NaraP. 25. 6.

**अनेकभूमियुक्त** (anekabhūmi-yukta) *adj.* possessing several storeys गृहाणां गृहगर्भं च जातिगर्भं विमिश्रितम्। अनेकभूमियुक्तानि यानि वासगृहाणि च MayaMa. 12. 83.

**अनेकभूषणभूषिताङ्गी** (anekabhūṣaṇabhūṣitāṅgī) *adj. (f.)* whose body is decorated with various ornaments सः ... राजवाहनेन ... अनेकभूषणभूषिताङ्गीमवन्तिसुन्दरीम् ... अग्निं साक्षीकृत्य संयोजयामास DaśKuC. 32.25.

**अनेकभूषणयुत** (anekabhūṣaṇa-yuta) *adj.* possessing, i.e. wearing various ornaments देवो रूपान्तरं दधौ। चतुर्भुजम् ... अनेकभूषणयुतम् GaṇeP. ii. 130. 22.

**अनेकभूषा** (aneka-bhūṣā) *f.* various decorations or ornaments निरस्तभूषोऽपि यथा विभाति पवित्रचारित्रविभूषितात्मा। अनेकभूषाभिरलंकृतोऽपि विमुक्तवृत्तो न तथा मनुष्यः SubhāRaSaṁ. 241.

**अनेकभूषादीप्ति** (anekabhūṣā-dīpti) *f.* lustre of various ornaments यस्यासीत्प्रमदा रम्या नाम्नोग्रा चारुहासिनी। ... अनेकभूषादीप्त्या या नाशयित्वाखिलं तमः GaṇeP. ii. 73. 13.

**अनेकभृङ्गाराव** (anekabhṛṅgārāva) *m.* [P. iii. 3. 50] humming sound of many bees दिनकरकिरणाभिसंतप्तमेदिन्याम् ... अनेकभृङ्गारावोन्नादितमूलेषु ... तरुषु ... प्रत्यूषप्रदोषार्धरात्रिषु विचरन्ति (हस्तिनः) Hastyāyur. 195. 22 (2. 13)

**अनेकभृङ्गी** (aneka-bhṛṅgī) *adj. (f.)* [P. iv. 1.41] resorted to by many (female) bees त्रिकल्पपूर्वा सरितां वरा या (रेवा) ...। वेदाङ्गविद्यानिपुणैरुपेता सरोजमिश्राम्बुरनेकभृङ्गी Rāvaṇā. 4. 20.

**अनेकभृतकसाध्य** (anekabhṛtaka-sādhya) *adj.* to be accomplished by a number of hired servants यदेकं स्वामिकर्मानेकभृतकसाध्यं भवति तत्र शाठ्यं वर्जयित्वा यो भृत्यो यावत्कर्म करोति तस्मै तदनुरूपं वेतनं देयम् Aparā. 798. 27 (*on* 2. 196); VīraMi. 673. 20 (*on* 2. 196)

**अनेकभृत्यसाध्य** (anekabhṛtya-sādhya) *adj.* to be accomplished by a number of servants अनेकभृत्यसाध्यकर्मणि भृतिदानप्रकारमाह Mitā. 279. 6 (*on* 2. 196); एतद्यानेकभृत्यसाध्ये कर्मणि वेतने वा परिभाषिते वेदितव्यम् Aparā. 799. 3 (*on* 2. 196); Subodhi. 86. 21 (*on* 2. 196); अनेकभृत्यसाध्यकर्मस्वरूपमाह BālamBha. ii. 295. 32 (*on* 2. 196)

**अनेकभेद** (aneka-bheda) *adj.* of many types or kinds, i.e. various परममतिर्गुणाननेकान्(v. l. परमगुणाननेकभेदान्) ... अनुशास्य तथ्यरूपान् गगनतलं द्युतिमान् विवेश MahāBhā. xiii. 27. 101; इन्द्रादयोऽनेकभेदा दिशामष्टकदेवताः BrahmāṇḍP. iii. 20. 44; स हेतुः विपक्षाद्विशेषो हेतुरित्येतावति चोद्यमाने विपक्षाद्विशेषमात्रस्य हेतुत्वं स चानेकभेदः NyāyVār. 128. 15 (*on* i. 1. 35); मुक्ताप्रवालतपनीयमनेकभेदम्। यद्यद्य दुर्लभतमं परराजधान्यां तस्मिन्पुरे प्रतिवसत् सुलभं च वस्तु VarāṅgaC. 1. 39; पद्यमनेकभेदम् KāvyālaṅSū. i. 3. 26; यम्यन्त इत्याद्यन्वर्थतानुस्मरणेनानेकभेदमन्तादिकम् Kāvyānu. (He.) 255. 2; अर्थो विरुद्धविषमादिरनेकभेदः कार्याश्रितो भवति AlaṅkāRa. 62 (6)

**अनेकभेद** (aneka-bheda) *m.* **1A** many differences चकार विविधां सृष्टिम् ...। देवाश्चानेकभेदेन मनुष्याः पशवस्तथा JayāS. 2. 41; विचित्रभेदं पुरुषैकनाथम्। अनेकभेदैरधिवासितं ते नतोऽस्मि रूपं जगदण्डसंज्ञम् KūrmaP. 133. 11 (1. 12);**1B** many types or kinds, i.e. varieties ज्ञानं त्वनेकभेदैर्यत्तत्त्वतामेति चात्मनः। गौण(णे?) विद्यामये तत्त्वे सम्यग् विद्यामयस्य च JayāS. 4. 53; (दीक्षा) संस्थितानेकभेदे JayāS. 16. 53; **1Ci** many (subordinate or intermediate) divisions (मुनिः) अनगारं सहागारं धर्मं विविधमब्रवीत्। अनेकभेदसंयुक्तं संसारोत्तारणावहम् PadmP. (Ra.) 106. 90; **1Cii** many distinctions or ramifications ये पुनः कल्पितानेकभेदवृत्तिं प्रचक्षते NyāyMañ. i. 298. 7; **2** various modifications or forms विष्णुतत्त्वं परिज्ञाय एकं चानेकभेदगम्। दीक्षयेन्मेदिनीम् JayāS. 16.9.

**अनेकभेदग** (anekabheda-ga) *adj.* pertaining to various modifications or forms विष्णुतत्त्वं परिज्ञाय एकं चानेकभेदगम् (v. l. भेदकम्)। दीक्षयेन्मेदिनीम् JayāS. 16. 9.

**अनेकभेदतस्** (anekabheda-tas) *adv.* **A** on account of many differences गन्धशब्देन ... पृथिवी परिगृह्यते। यदि वा परभागोऽस्या गन्धस्यानेकभेदतः BrĀraUBhV. ii. 4. 358; **B** in various ways दुःखानि यानि संसारे विद्यन्तेऽनेकभेदतः SubhāRaSaṁ. 555.

**अनेकभेदबहुल** (anekabheda-bahula) *adj.* abounding in, i.e. attended with many distinctions or ramifications अनेकभेदबहुलं नाट्यमस्मिन्प्रतिष्ठितम् NāṭyaŚā. 8. 9.

**अनेकभेदभिन्न** (anekabheda-bhinna) *adj.* **1** varied due to many distinctions or ramifications न्यसेम केसरे लाजास्तां शक्तिं तद्धि कर्मणि। अनेकभेदभिन्नानां व्यापिनीं सर्वदेहगाम् PauṣkS. 6. 74; अनेकभेदभिन्नेषु प्रासादेषु महामते। विस्तरेण ... वक्ष्ये ... देवतानां च संस्थितिम् PāraS. 10. 3; द्वे वस्तुनी अस्मिन्पिण्डे उपलभ्येते अनेकभेदभिन्नेन करणेन येनोपलभते AitUBh. 288. 11 (*on* 5.1); सुरतमनेकभेदभिन्नं स्फुटमुदितं परिहृत्य फल्गु वाक्यम् NāgaSa. 37. 1; मुनिभिरनेकभेदभिन्नशास्त्रजडैरभिनिविष्टमतिभिस्तत्त्वमुपादेयं न किंचित्कथितम् AuciViCa. 34 (8); मुख्यानि द्विशालानि षडेव हि। अनेकभेदभिन्नानि लघुप्रस्तारयोगतः SamarāSū. 22. 3; अनेकभेदभिन्नो हि प्रपञ्च इष्यते NyāySu. (Ja.) 406B. 3 (*on* ii. 2.8); **2** distinct on account of various forms or modifications अनेकभेदभिन्नस्तु क्रीडते परमेश्वरः KūrmaP. 49. 3 (1. 4)

**अनेकभेदवितत** (anekabheda-vitata) *adj.* extended by many distinctions or ramifications अनेकभेदबहुलं (v.l. अनेकभेदविततं) नाट्यमस्मिन् प्रतिष्ठितम् NāṭyaŚā. 8. 9.

**अनेकभेदविषय** (anekabheda-viṣaya) *adj.* referring to many divisions or branches ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम् BṛSaṁ. 1. 9.

**अनेकभेदसंपन्न** (anekabheda-sampanna) *adj.* endowed with, i.e. possessing many types or varieties अनेकभेदसंपन्नः पदाध्वा समुदाहृतः ŚivaP. vii (2). 17. 6 (565B. 2)

**अनेकभेदसंभिन्न** (anekabheda-sambhinna) *adj.* distinct due to many differences अनेकभेदसंभिन्नं यदेतद् व्याकृतं जगत्। नामरूपक्रियातत्त्वमेतत्सर्वं प्रतीयताम् BṛĀraUBhVā. i. 6. 10.

**अनेकभेदिन्** (anekabhed-in) *adj.* possessing various modifications or forms परिजप्यं द्विजश्रेष्ठ यावद्वाणी निवर्तते। स्वभावस्थो गुरुः साक्षात्परेणानेकभेदिना JayāS. 18. 32.

**अनेकभेदोत्था** (anekabhedotthā) *adj.* (*f.*) arising from many distinctions मन्त्रमूर्तिर्गृहान्तरे। एका वानेकभेदोत्था विद्यते बिम्बलक्षणा PauṣkS. 32.84.

**अनेकभेदोपास्य** (anekabhedopāsya) *adj.* to be meditated upon as (having) various modifications or forms ब्रह्मणः ... अनेकभेदोपास्यस्य ... उपासनं विधित्सन् आह ChāndoUBh. 173. 2 (*on* iii. 14. 0)

**अनेकभोग** (aneka-bhoga) *adj.* having many hoods सन्मणिरनेकभोगो गुरुभारसहः स्थिरात्मतास्थानम्। नरदेव चित्रमेतद्यदशेषगुणैस्त्वमाश्लिष्टः KuṭṭaMa. 779; **2** having, i.e. experiencing many types of enjoyments or pleasures, KuṭṭaMa. 779.

**अनेकभोग** (aneka-bhoga) *m.* many types of enjoyments or pleasures अनेकभोगसंयुक्ता हृष्टाः पुष्टाः स्त्रियः सतीः। रक्षन्ति पतयः पुण्या यथा वृद्धपुरस्कृताः SaurP. 38. 41.

**अनेकभोजन** (aneka-bhojana) *n.* various (types of) meals तन्नित्यमेवानेकभोजनभक्ष्यादिभिः पुष्टिं नीयते Pañcā. 277. 8.

**अनेकभौमक** (anekabhauma-ka) *n.* building with more than one storey एकभौमकमनेकभौमकं योजनीयमवनीपतीच्छया MayaMa. 25. 176.

**अनेकभ्रातृ** (aneka-bhrātṛ) *adj.* (used as noun) (one) having many brothers अनेकपितृकाणामनेकभ्रातृणां ये पुत्रास्तेषाम् ... प्रत्येकमंशकल्पना DīpKa. 55.8 (*on* 2.120); यद्यपि भगिन्यश्चेति भ्रातृभिरिति च बहुवचनद्वयेनांशमित्येकवचनेन चानेकभ्रातृकर्तृकानेकभगिन्युद्देश्यकैकतुरीयांशकर्मकदानलाभेन प्रत्येकं भगिनीनां भागसंबन्धलाभो न BālamBha. ii. 158. 10 (*on* 2.124)

**अनेकमख** (aneka-makha) *m.* various sacrifices तेन ... सुहृत्स्वजनसमेतेन ... अनेकमखकरणार्जितपुण्यप्राग्भारेण ... सुखमनुभूयते स्म Pañcā. 64. 21.

**अनेकमखक्रिया** (anekamakha-kriyā) *f.* [P. iii. 3. 100] performance of various sacrifices नानाविधोद्यानतडागसस्यमहोत्सवानेकमखक्रियाद्यैः। मीनस्थिते देवगुरौ धरित्री रम्या VasiS. 6. 100.

**अनेकमखाह्वान** (anekamakhāhvāna) *n.* invocation in various sacrifices अनेकमखाह्वानगमनमूढमतिकक्षे सहस्राक्षे YaśasCam. i. 250. 2.

**अनेकमङ्गलगुण** (aneka-maṅgalaguṇa) *m.* various auspicious qualities उदाहृतदहरविद्यायां यदनेकमङ्गलगुणविशिष्टं दिव्याद्भुतरूपं च ब्रह्म वर्णितम् ŚivārkaMaDī. i. 429. 9 (*on.* i. 3. 12)

**अनेकमङ्गलद्रव्य** (aneka-maṅgaladravya) *n.* various auspicious materials मूर्ध्नि पीठस्य ...। पर्यन्तरचितानेकमङ्गलद्रव्यसंपदि। ... ईराड् निवेशयामास MahāP.23.6; अनेकमङ्गलद्रव्यसहितः श्रेष्ठी, ताश्च ... गतास्तत्र SamyaKau.29.5.

**अनेकमणि** (aneka-maṇi) *m.* **A** various gems (अभिययौ स हिमालयम्) ससुरचापमनेकमणिप्रभैरपपयोविशदं हिमपाण्डुभिः। अविचलं शिखरैरुपबिभ्रतम् ... अम्बुमुचां चयम् Kirātā. 5. 12; **B** many gems अनेकमणिष्वनुस्यूतं सूत्रमिव ... आत्मानं पश्यतः NyāySu. (Ja.) 491A. 4 (*on* iii. 2. 1); Nyāyāmṛ. 398A. 5; अनेकमणिमौक्तिकैर्घटितभूषणाभूषितः ... भातीश्वरः Vidvanmo. 8. 115.

**अनेकमणित** (aneka-maṇita) *n.* many inarticulate murmuring-sounds अनेकमणितैर्बन्धविशेषैश्च कलाग्रहैः। वशं नयेत यः कान्तां स धृष्टः परिकीर्तितः ŚṛṅgāDī. 2. 85.

**अनेकमणिप्रबन्ध** (anekamaṇi-prabandha) *adj.* having the arrangement of many gems हेम्ना विनिर्मितमनेकमणिप्रबन्धं नीवीनिबन्धनगुणं विनिवेदयामि TripuMāPūSt. (Śaṅ.) 56.

**अनेकमणिमण्डित** (anekamaṇi-maṇḍita) *adj.* adorned with various gems द्वाराणि तत्र शोभन्ते कांचनैः कलशैः स्थितैः। सितपद्ममुखैर्द्वारैरनेकमणिमण्डितैः SkandP. v(1). 26. 4.

**अनेकमणिमाणिक्य** (aneka-maṇimāṇikya) *adj.* studded with various gems and rubies अनेकमणिमाणिक्यकिरीटभूषणं क्वचित्। ... परमं कारणं कृष्णम् ... श्रोतुमिच्छामि PadmP. iv. 69. 92.

**अनेकमणिमाला** (aneka-maṇimālā) *f.* several strings or laces of gems अनेकमणिमालालंकृतमपि रत्नचतुष्कराजितम् ... आयतनं ददर्श TilaMañ.215.23.

**अनेकमणीमय** (anekamaṇī-maya) *adj.* [*f.*-ī] [P. iv. 3. 82] **A** consisting of various gems अनेकमणीमयम्। कुसुमवर्षचितं तव देशनावनितलं क इवेत्य न मोदते ŚrīVīraSta. 12; **B** made of various gems दन्ताश्च स्फटिकमयाः ...। इत्यनेकमणीमय्यः प्रतिमास्ताश्चकाशिरे TriṣaŚaPuC. i. 6. 602.

**अनेकमण्डल** (aneka-maṇḍala) *n.* many states, regions or territories पुरुषातिश-येनेवानेकमण्डलकृतसेवेन श्मशानवाटेन गत्वा ... विन्ध्याटवीं विवेश VāsaDa. 243. 2.

**अनेकमण्डल** (aneka-maṇḍala) *m.* many dogs, VāsaDa.243.2 (comm.पक्षे श्वा)

**अनेकमण्डलेश्वर** (anekamaṇḍaleśvara) *m.* lord of many states or regions सेवितानेकमण्डलेश्वर इव तरुणः ManuBh. i. 125. 13 (*on* 2. 95)

**अनेकमण्यनुस्यूत** (anekamaṇy-anusyūta) *adj.* woven into, i.e. continued in many gems अनेकमण्यनुस्यूतसूत्रमिवानेकदेहेष्वनुस्यूतमात्मानं पश्यतः स्वतो भेदधीः AdvaiSi. 615. 20.

**अनेकमतभेद** (aneka-matabheda) *m.* many theoretical differences स्वमतेऽप्यनेकमतभेदाः ... प्रकल्पिताः सन्ति KumāPraPra. 103. 20.

**अनेकमति** (aneka-mati) *adj.* **1** having varied intelligence or knowledge सिंहे स्ववंशनाथः कुलीरभे ज्ञानवाननेकमतिः HorāSā. 21. 3; **2** (an-ekamati) not having concentration of mind आद्य(?अधा)र्मिकः कदर्यो गुणविमुखः परुषवागनेकमतिः। भुङ्क्ते संपदमीदृक् Subhāṣi. 3116.

**अनेकमति** (aneka-mati) *f.* notion of more than one (contradictory item) एकानेकमतौ संदेहो न स्यात् NyāyVār. 246. 13 (*on* ii. 1. 34)

**अनेकमत्तमातङ्ग** (aneka-mattamātaṅga) *adj.* **1** consisting of many intoxicated or rutting elephants स त्वनेकमत्तमातङ्गसैन्यसङ्घादिव मदेनान्धतां दधानो मातङ्गीसङ्गपङ्ककलङ्कभाजनमजनि PrabaCin. 112. 18; **2** consisting of many haughty low-castes, PrabaCin. 112.18.

**अनेकमत्स्यपरिवृत** (anekamatsya-parivṛta) *adj.* surrounded by more than one fish अनेकमत्स्यपरिवृत एकः कुलीरकोऽब्रवीत् Tantrākhyā. 18. 19; PañcT. 1. 61 (6) (66.8)

**अनेकमदान्ध** (anekamadāndha) *adj.* blinded with arrogance caused by manifold (factors) त्वं नूनमसुराणां नः पारोक्ष्यः परमो गुरुः। यो नोऽनेकमदान्धानां विभ्रंशं चक्षुरादिशत् BhāgP. viii. 22. 5.

**अनेकमदान्धवारण** (aneka-madāndhavāraṇa) *m.* many elephants blinded with (excessive) rut यस्यानेकमदान्धवारणघटाकुम्भस्थलीभेदनव्यापारैकविनोददुर्ललितया कालोऽगमल्लीलया ... स एवाधुना सिंहः ... धत्ते दशामीदृशीम् Subhāṣi. 613.

**अनेकमनस्** (aneka-manas) *n.* many minds अतिरंहसोऽस्य (नृपतेः) दधते हि वाजिनः पटुतामनेकमनसां विलङ्घने PṛthvīVi. 9. 59.

**अनेकमनस्क** (anekamanas-ka) *adj.* having more than one mind यदा तु योगी बहून्कायान्निर्मिमीते तदा किमेकमनस्कास्ते भवन्त्यथानेकमनस्काः YogBh. 185. 2 (*on* 4. 3)

**अनेकमन्त्र** (aneka-mantra) *m.* **1A** many sacred formulae अमृत ... श्योगिनायकः। कृतस्थितिः पत्तनगुङ्कडीसरस्यनेकमन्त्रादिसमृद्धिमन्दिरम् Gurvā. 306; **1B** more than one sacred formula अनेकमन्त्रासाध्यो होमश्चात्र सूक्तादिसाध्य एक

एव बोध्यः ViraMi. (Paribhāṣā.). 79. 25; **2** (employment of) many spells or incantations चित्तयेत्रष्टहृदयः ... यः ... सोऽपि पुराणरसवादादिगारुडानेकमन्त्रवित्। ... सर्ववाङ्मयवेत्ता च सर्वज्ञो देवि जायते NityāṢoḍa. 4. 30.

**अनेकमन्त्रक** (anekamantra-ka) *adj.* having more than one sacred formula अनेकमन्त्रके एकमन्त्रके वा अनेकहोमे प्रतिहोमं प्रणवः कार्यः ViraMi. (Paribhāṣā.) 80. 1.

**अनेकमन्त्रकोटी** (aneka-mantrakoṭī) *f.* many crores of sacred formulae अनेकमन्त्रकोटीभिः संस्मरेत्सेवितं सदा (महामन्त्रम्) JayāS. 21. 232.

**अनेकमन्त्रपरामर्श** (anekamantra-parāmarśa) *m.* consideration of several sacred formulae न चानेकमन्त्रपरामर्शसापेक्षशब्दार्थप्रत्यभिज्ञानुसारेणोपक्रमगतसप्तमीश्रुतिप्राप्तं लिङ्गमन्यथा नेतुमयुक्तम् ŚivārkaMaDī. i. 404. 24 (*on* i. 3. 4)

**अनेकमन्त्रसंस्कृत** (anekamantra-saṁskṛta) *adj.* sanctified or purified by many sacred formulae कृते सोमयागादावनेकमन्त्रसंस्कृतेष्टकाचित्य-संस्पर्शनेऽपि स्नानदर्शनात् Aparā. 18. 14 (*on* 1. 7)

**अनेकमन्त्रसाध्यका** (anekamantrasādhya-kā) *adj.* (*f.*) to be accomplished through many sacred formulae यत्रानेकमन्त्रसाध्यका होमादिव्यक्तिस्तत्र द्वितीयादिमन्त्रादिषु प्रणवो नास्ति ViraMi. (Paribhāṣā.) 79. 17.

**अनेकमन्वन्तरदर्शिन्** (anekamanvantara-darśin) *adj.* who has seen, i.e. experienced numerous ages of Manus अनेकमन्वन्तरदर्शिना मया न खल्वरामो ददृशे भवादृशः Yādavā. 14. 26.

**अनेकमन्वन्तरायुस्** (anekamanvantarāyus) *adj.* having (the span of) life of numerous ages of Manus त्रिदशाः खल्वेते अनेकमन्वन्तरायुषोऽनिमिषचक्षुषो नभश्चारिणः कामगास्त्रिनयनचतुर्भुजादयः Kiraṇā. 55. 13.

**अनेकमय** (aneka-maya) *adj.* possessing (the qualities of) more than one (i.e. both the sun and the moon) सौम्यत्वेन निशामणिर्दिनमणिरतीव्रप्रतापेन च ... एकानेकमयो गुणैर्नवनवैः श्रीकर्मराजः सुधीः EI. ii. 47. 44.

**अनेकमरणनिमित्तवत्** (anekamaraṇanimitta-va(n)t) *adj.* having many causes of death यस्मादयमनेकमरणनिमित्तवान् तस्मात् सर्वदा मृत्योरास्ये वर्तते BṛĀraUBh. 597. 12 (*on* iv. 3. 36)

**अनेकमलप्रचय** (anekamala-pracaya) *m.* collection of various types of impurities (i.e. impediments or limiting conditions) किमीश्वरविषयज्ञानमात्रं निर्वाणकारणं किं वा साक्षात्कारः। ... नापि द्वितीयः। अनेकमलप्रचयोपचितानाम् ... पशूनां परमेश्वरसाक्षात्कारानुपपत्तेः SarvaDaSaṁ. 6. 128.

**अनेकमलसंभव** (anekamala-sambhava) *adj.* arising from, i.e. produced by various types of impurities or moral taints अनेकमलसंभवे कृमिकुलैः सदा संकुले विचित्रबहुवेदने बुधविनिन्दिते दुःसहे। भ्रमन्नयमनारतं व्यसनसंकटे देहवान् ... भवे भवति SubhāRaSaṁ. 243.

**अनेकमल्लसंचार्य** (anekamalla-sañcārya) *adj.* fit to be moved by several wrestlers अनेकमल्लसंचार्यं दृष्ट्वा तस्यानतं धनुः। देवस्वामी ददौ तस्मै ... भगिनीम् BṛKathāMañ. ix. 2. 378.

**अनेकमल्लिकाक्ष** (aneka-mallikākṣa) *m.* many swans called *mallikākṣa* सिप्रा नाम नदी। यत्र (पयः) ... अनेकमल्लिकाक्षकुटुम्बिनीकदम्बचुम्ब्यमानजम्बालजालजटिलजलदेवतादोलम् YaśasCam. ii. 208. 2.

**अनेकमशकाकीर्ण** (anekamaśakākīrṇa) *adj.* full of or overspread with many mosquitoes or gnats अनेकमशकाकीर्णोदुम्बरप्रतिमात्मना। नानाजीवविभेदेन ... पुरुषेणास्थितं क्वचित् AhirbuS. 9. 27.

**अनेकमस्तक** (aneka-mastaka) *adj.* having many hoods सुपर्णवशगा नागा जज्ञिरेऽनेकमस्तकाः HariVaṁ. 3. 86.

**अनेकमहर्षिमस्तक** (anekamaharṣi-mastaka) *m., n.* heads of many great sages स जयति ... नाम्नानेकमहर्षिमस्तकवलत्पादोऽक्षपादो मुनिः NyāyMañ. ii. 208. 25.

**अनेकमहापातकनाश** (anekamahāpātaka-nāśa) *m.* destruction of many great sins यत्तु मण्डपाख्यानादौ सकृत्पञ्चक्रोशयात्रामात्रेणानेकमहापातकनाशप्रतिपादनम् तदर्थवादमात्रमिति भवतामङ्गीकार्यम् TristhaSe. 125. 14.

**अनेकमहापापहरा** (anekamahāpāpa-harā) *adj.* (*f.*) which removes many great sins सूर्यवंशभवानां च राज्ञां चारित्रमद्भुतम्। तत्रानेकमहापापहरा रामकथा कृता PadmP. iv. 1. 6.

**अनेकमहाप्रभावमाणिक्य** (aneka-mahāprabhāvamāṇikya) *n.* many rubies having great lustre (सेनापतिः) तत्कालमादिष्टनिकटराजलोकढौकितमनेकमहाप्रभावमाणिक्यखचितमुद्रसं(म)ङ्गुलीयकरत्नमग्रतो दर्शयन् ... ज्वलनप्रभदेववृत्तान्तम् ... यथाश्रुतमकथयत् TilaMañ. 98. 13.

**अनेकमहाफल** (aneka-mahāphala) *adj.* possessing many big fruits स्थिरोऽनेकमहाफलः। जातस्तरुरयम् Kāvyālaṅ. (Bh.) 2.80 =VakroJī. 210. 5.

**अनेकमहामहीभृत्** (aneka-mahāmahībhṛt) *m.* **1** many great mountains राजा तु ... अनेकमहामहीभृत्परंपरागतां गङ्गामिव दुर्गतिहराम् ... पश्यंश्चैतां (एकावलीम्) विस्मयमाजगाम HarṣaC. 334. 3; **2** many great kings, HarṣaC. 334.3.

**अनेकमहारथ** (aneka-mahāratha) *m.* various great warriors मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः BhāgP. i. 8. 24.

**अनेकमहाराज** (aneka-mahārāja) *m.* great king of many उवाच ... भरद्वाजः बहुभिः अनेकमहाराजाय ItihāU. 18. 20.

**अनेकमहावीर** (aneka-mahāvīra) *m.* various great heroes तामनेकमहावीरकरम्बनिकराङ्किताम्। वीक्ष्य युद्धक्षितिं तासां हृदयानि विदुद्रुवुः PāṇḍaC. 13. 1057.

**अनेकमहाव्याधि** (aneka-mahāvyādhi) *f.* various great diseases अनेकमहाव्याधिविह्वलीभूतमानसः। निद्रां न लभते नक्तं दिवापि विनयंधरः BṛKathāK. 13.5.

**अनेकमहासमानीक** (aneka-mahāsamānīka) *m., n.* many great battles तमनेकमहासमानीकसंतोपितरणदेवताविहितबलिविधानम् ... करवालम् ... करादुत्सृज्य मुनिकुमारकयुगलमुपावीविशत् YaśasCam. i. 163. 4.

**अनेकमहासामन्त** (aneka-mahāsāmanta) *m.* many great (neighbouring) kings or feudatory princes सेवागतानेकमहासामन्तमुकुटमाणिक्योन्मुखमयूखशेखरिताश्चलपल्लवैर्विचित्ररत्नरचितकाण्डकोटिभिः विविधाकृतिपताकादुकूलैः ... त्रिदिवद्रुमोद्यानश्रियं विस्तारयन् ... अहं प्रत्यावबृते YaśasCam. i. 336. 1 (comm. देशपतयः)

**अनेकमहास्मृति** (aneka-mahāsmṛti) *f.* many great codes of laws (Smṛtis) बहूनामनुग्रहो न्याय्य इति न्यायेन तेषामनेकमहास्मृतिविरोध(?धि)तत्वमिति भावः BālamBha. iii. 75. 2 (*on* 3. 24)

**अनेकमहाह्रद** (aneka-mahāhrada) *m.* many large lakes or pools अभूदगस्त्यस्याश्रमो मुनेः ... कावेरीवारिवहले यत्रानेकमहाह्रदे। पीत्वोद्गीर्णमिवागस्त्येनाब्धिपाथः पदे पदे KathāSaSāg. xii. 35. 54.

**अनेकमहिलासमराग** (anekamahilā-samarāga) *adj.* having equal attachment to many ladies अनेकमहिलासमरागो दक्षिणः कथितः (नायकः) SāhiDa. 98. 15.

**अनेकमहीमहेन्द्र** (aneka-mahīmahendra) *m.* many great lords, i.e. rulers of the earth शाहभूपः। यस्यानेकमहीमहेन्द्रसमरे मत्तेभकुम्भस्थले विद्युद्भ्रान्तिकरी बभूव निभृता खड्गप्रभिर्भास्वरा ParamāKā. 1.6.

**अनेकमांसाद** (anekamāṁsāda) *adj.* who eats various kinds of flesh पुरा योऽनेकमांसादो दुर्गन्धोऽभूज्जुगुप्सितः। सोऽयम् ... सुन्दरोऽभवत् PadmP. (Ra.) 41. 160.

**अनेकमाणिक्य** (aneka- māṇikya) *n.* various (kinds of) rubies (लिङ्गस्य) तस्य दर्शनादनेकमाणिक्यरचितं सिद्धगन्धर्वसेवितं विमानवरमारुह्य शक्रलोकं गतः। ... दर्दुरः SkandP. v(2). 84. 43; दृष्टवान् ... अनेकमाणिक्यखण्डखचितकाञ्चनशिलासंघातमेकं दिव्यमायतनम् TilaMañ. 155. 8; समन्तादुत्सर्पतानेकमाणिक्यरुचितरङ्गप्रसरेण परिकल्पयद्भिरिव ... सोपानपरंपराम् ... चैत्यालयैः ... उपशोभितं राजपुरं नाम नगरम् YaśasCam. i. 21. 3; ii. 300. 1.

**अनेकमाणिक्य** (aneka-māṇikya) *adj.* inlaid with various rubies दृष्टवान् ... अनेकमाणिक्यमन्त(?त्त)वारणकभूषितम् ... आयतनम् (अहम्) TilaMañ.154.12.

**अनेकमातङ्गतुरङ्गसङ्गिन्** (anekamātaṅgaturaṅga-saṅgin) *adj.* consisting of many elephants and horses अनेकमातङ्गतुरङ्गसंगी परैरलङ्घ्यो निजकामचारी। ... बभौ समुद्रादधिकं बलौघः Rāṣṭrau. 9. 11.

**अनेकमातृ** (aneka-mātṛ) *f.* many mothers (including uterine mother and step-mothers) अनेकमातृभिरेकचित्यामन्वारोहणे कृतेऽप्येवमेव SmṛtiCan. v. 428.2.

**अनेकमातृक** (anekamātṛ-ka) *adj.* having different mothers पृथग्जनाः पृथक्क्षेत्रसमानजातीया अपि अनेकमातृका भवन्ति ManuBh. i. 448. 22 (*on* 5. 60)

**अनेकमात्र** (aneka-mātra) *n.* **A** more than one (i.e. two) in general उभयग्रहणमनेकमात्रोपलक्षणम् NyāySu. (Ja.) 390A. 9 (*on* ii. 2. 7); **B** more than one only द्वितीयाह्निके एकानेकवृत्तिगुणपरीक्षाप्रकरणम् अनेकमात्रवृत्तिगुणपरीक्षाप्रकरणम् ... परीक्षितुमाह Upask. 310. 3 (*on* vii. 2. 1)

**अनेकमानस** (aneka-mānasa) *n.* many minds स विद्याधरः ... प्रविष्टः ... विद्याबलादनलनाशवमनादिविकारप्रबलात्कृतानेकमानसोद्वेजनवैयात्यो रेवत्याः क्वचिदपि मनोमूढतामपश्यन्(?त्) YaśasCam. ii. 301. 21.

**अनेकमाय** (aneka-māya) *adj.* skilled in various magics एकः पदातिः ... योऽनेकमायानि ... । रक्षःसहस्राणि चतुर्दशार्दीत् Bhaṭṭi. 12. 56.

**अनेकमाया** (aneka-māyā) *f.* **A** various tricks or deceits (संह्रादस्य तु दैत्यस्य ... कुले। समुत्पन्नाः) अनेकमायाकुशला धनुर्वेदस्य पारगाः (सुताः) HariVaṁ. 83*(1); अनेकमायया हत्वा रिपुं मम निवेद्यताम् GaṇeP. ii. 82. 53; **B** various magical powers (विनायके) न चात्र संशयः कार्योऽनेकमायामये विभौ GaṇeP. ii. 59. 5.

**अनेकमायावञ्चनादि** (aneka-māyāvañcanādi) *adj.* various forms of illusion or deception etc. कूटः माया वञ्चना जिह्मता कुटिलता इति पर्यायाः, अनेकमायावञ्चनादिप्रकारेण स्थितः कूटस्थः GītāBh. (Śaṅ.) 444. 14 (*on* 15. 16)

**अनेकमारुतीयाग** (aneka-mārutīyāga) *m.* many sacrifices (offered) to Maruts अनेकमारुतीयागविधाय्युपाकरोत्यनुषङ्गाद्वैरूप्यार्थमुक्तस्वप्यनेकयागकल्पनं शक्यते वक्तुम् MīmāKau. iii (2). 244. 1 (*on* ii. 2. 20)

**अनेकमार्ग** (aneka-mārga) *m.* **Ai** various expedients अनेकमार्गवृत्तिम् ... गिरमुज्ञगार ... वह्निगर्भः HarVi. 10. 11 (comm. अनेकत्र मार्गे संधिविग्रहयात्रादौ); **Aii** various ways or means प्राप्तव्यस्य चैकत्वात् अनेकमार्गकल्पनमनर्थकम् BrahmSūBh. (Bhā.) 234. 15 (*on* iv. 3. 1); एकस्मिन् गन्तव्येऽनेकमार्गवैयर्थ्यमाशङ्क्याह VedāntKa. 538. 8 (*on* iv. 3. 1); **B** many paths, i.e. three worlds, HarVi. 10. 11 (comm. अनेकत्र मार्गे ... भुवनत्रये च); **C** various ways, i.e. manners or methods चित्रयतीति चित्रवैचित्र्यकरण इति चौरादिकस्य रूपम् अनेकमार्गम् आश्रयतीत्यर्थः Pradī. iii. 51A. 35 (*on* iii. 1. 19)

**अनेकमार्गग** (anekamārga-ga) *adj.* **1** moving in various ways अनेकमार्गगम्। श्रुतिपेशलस्वरमिहालिमण्डलं श्रियमेति गेयमिव जातिसंश्रयम् HarVi. 5. 79; **2** following various poetic styles. HarVi. 5. 79 (comm. मार्गाश्चित्रवार्त्तिकदक्षिणा अपि)

**अनेकमार्गा** (aneka-mārgā) *adj.* (*f.*) **A** flowing in many paths or courses, i.e. streams रयेण सा संनिदधे ... आत्मनि चापयष्टिः। समुद्धता ... स्वाध्यायधीः सिन्धुरनेकमार्गा Kirātā. 17. 52; विद्यास्तदा ...। जग्राह भूपकुलभूषणहेतुभूताः स्रोतस्विनीरिव पयोधिरनेकमार्गाः YaśasCam. i. 237. 9; **B** having various ways, i.e. methods or means, YaśasCam. i. 237. 9.

**अनेकमाष** (aneka-māṣa) *m.* many particualar weights for measuring gold (equal to eight *guñjas* or five *kṛṣṇalas* = 1/10 *suvarṇa*) कार्षापणो ह्यनेकमाषसमुदायः Nyās. ii. 907. 10 (*on* viii. 1. 12); Pradī. vii. 35. 12 (*on* viii. 1. 12); PadMañ. *on* KāśiVṛ. *on* P. viii. 1. 12 (250. 15); अनेकमाषसमुदायादपि कार्षापणात् द्वयोरस्ति दानक्रियया व्याप्तिरिति सिद्धं द्विर्वचनमिति भावः Pradī. vii. 35. 20 (*on* viii. 1. 12)

**अनेकमिथ्यात्व** (aneka-mithyātva) *n.* falsity or unreality of diversity अनेकाश्रये ब्रह्मण्यनेकनिषेधे चानेकमिथ्यात्वं सिद्धम् GuruCandr. ii. 272. 23.

**अनेकमुकुटोज्ज्वल** (anekamukuṭojjvala) *adj.* shining or dazzling with many crowns अनेकवर्णरूपं चानेकमुकुटोज्ज्वलम्। दृष्ट्वैवं देवदेवस्य रूपं भानोर्महात्मनः। ... तुष्टुवुस्ते दिवाकरम् BhaviP. 227B. 10 (i. 153. 47)

**अनेकमुक्त** (aneka-mukta) *adj.* (used as noun) many emancipated (persons) भास्वन्मध्यनायका(?क)मनेकमुक्तानुयातमपवर्गमार्गमिव हारमुद्वहन्ती ... सरस्वती HarṣaC. 13. 7.

**अनेकमुक्ता** (aneka-muktā) *f.* many pearls भास्वन्मध्यनायका(?क)मनेकमुक्तानुयातमपवर्गमार्गमिव हारमुद्वहन्ती ... सरस्वती HarṣaC. 13. 7.

**अनेकमुख** (aneka-mukha) *adj.* [*f.* - ī] **1A** carried out in more than one place स्वभूमिजानां राजपण्यानामेकमुखं व्यवहारं स्थापयेत्। परभूमिजानामनेकमुखम् ArthŚā. i. 242. 1 (2. 15); **1B** having more than one mouth or opening कुम्भैः ...। एकानेकमुखैः प्रान्तभ्रान्तभ्रमरमण्डलैः। ... अभिषेकः कृतः PadmP. (Ra.) 7. 364; **2** having many types or kinds पापपार्थिवस्यास्यानवस्थितं बलम् ... अनेकमुखानि छिद्राणि AvantiKa. 40. 19; 149. 19; उपकारपक्षस्त्वनेकमुख्य(?ख्या)नवस्थादुःस्थतया नोपन्यासस्यापि योग्यः Kiraṇā. 143. 4; मानोन्नतेत्यसहनेत्यतिपण्डितेति मय्येव धिक्कृतिरनेकमुखी सखीनाम् SaraKaṇṭhā. 717.9; SubhāRaK.21.1; SūktiMu. 84. 6; ŚārṅgaPa. 3547; **3** moving in diverse directions, dispersed वृद्धस्य राज्ञोऽनुमते वलानि जगाहिरेऽनेकमुखानि मार्गात् Bhaṭṭi. 2. 54; सुरा अपि ते विगतव्यथाः ... सपदि खेन सुखेन यथासुखं ययुरनेकमुखा मघवन्मुखाः ŚivaP. viii (1). 23. 56 (528B. 10); **4A** having many faces, i.e. off-shoots अनेकमुखानि हि कार्याणि क्षणाद्यान्यथा भवन्ति ManuBh. ii. 52. 12 (*on* 7. 178); **4B** having more than one face (ब्राह्मणः ... ययौ। शैलं मन्दरम्) एकानेकमुखैः शान्तैः सर्वदा सुखिभिर्युतम्। ... नानारूपधरैश्चान्यैः सेवितम् PadmP. iv. 105. 37 [scattered, APTE]

**अनेकमुख** (aneka-mukha) *n.* many faces दर्पणभेदेऽप्यनेकमुखप्रतीतेः मणिदर्पणकृपाणेषु च विरुद्धरूपानेकमुखप्रतीतेश्चायोगात् Nyāyāmṛ. 609B. 5; दर्पणादेरभिघातकतामात्रेण उपक्षीणतया दर्पण इव दर्पणभेदेऽप्यनेकमुखप्रतीतिर्न स्यात् AdvaiSi. 849. 24.

**अनेकमुखता** (anekamukha-tā) *f.* **1** the state of having more than one, i.e. four faces अनेकमुखतां बिभ्रत्कर्तात्र युगपद्वतेः। द्विषतां संप्रहारेऽसावेककः कमलासनः HarVi. 43. 181 (comm. चतुराननत्वम्); **2** the state of having various causes or means (of killing). HarVi. 43. 181 (comm. बहूपायत्वम्)

**अनेकमुखप्रतिबिम्ब** (anekamukha-pratibimba) *n.* various types of reflections कथमेकस्मिन्नल्पपरिमाणे युगपदसंकीर्णतया प्रतीयमानानां महापरिमाणानामनेकमुखप्रतिबिम्बानां सत्यतानिर्वाहः SiddhāLeSam. 281. 13.

**अनेकमुखम्** (anekamukham) *adv.* in more than one outlet or place सुराध्यक्षः सुराकिण्वव्यवहारान् दुर्गे जनपदे स्कन्धावारे वा ... कारयेदेकमुखमनेकमुखं वा विक्रयक्रयवशेन वा ArthŚā. i. 291. 2 (2. 25)

**अनेकमुखरक्ष** (anekamukha-rakṣa) *adj.* [*f.* - ā] **1** protecting from many sides or directions परितः परिखा बाह्ये शिबिरयुतानेकमुखरक्षा MayaMa. 10. 22; **2** protecting in various ways अक्षयजलान्नशस्त्रम् ... सर्वं हि दुर्गजालं सप्राकारं त्वनेकमुखरक्षम् MayaMa. 10. 39.

**अनेकमुख्य** (aneka-mukhya) *adj.* having many chiefs or commanders हस्त्यश्वरथपादातमनेकमुख्यमवस्थापयेत (दुर्गेषु) ArthŚā. i. 131. 1 (2.4) (comm. अनेके मुख्या बलप्रधाना यस्मिंस्तत्); ii. 205. 5 (5.3); iii. 61. 1 (9. 3); (राजा) यास्यन् पुरः ... अनेकमुख्यं च बलं विदध्यात् NītiSā. 16. 17.

**अनेकमुख्यवाद्य** (aneka-mukhyavādya) *n.* many main musical instruments अनेकमुख्यवाद्यैश्च प्राणिभाषानुकारकैः। ... भण्डो मूर्तो हास्यरसोऽभवत् RājTa. (Śrī.) 3. 236.

**अनेकमुख्यविशेष्य** (aneka-mukhyaviśeṣya) *n.* many chief qualificands or substantives वाक्यं चैकार्थकपदसमूहः। एकार्थत्वं चानेकमुख्यविशेष्यराहित्यम् BhāṭṭCin. i. 48. 8 (*on* i. 1. 4)

**अनेकमुनि** (aneka-muni) *m.* many sages अनुचरः ... पश्यति स्म महाश्रमम्। ... यत्राग्निहोत्रजो धूमः पवित्रयति सर्वदा। अनेकमुनिसंजुष्टो मुक्तपत्रलतोत्तमः PadmP. iv. 47. 29; स भृगुः ... अनेकमुनिसंनिधौ गुरुसंभावनया प्रीतमनास्तानृषीन् प्रत्युवाच ManvaMu. 20. 1 (*on* 1. 60)

**अनेकमुनिवृन्द** (anekamuni-vṛnda) *n.* group of many sages नृपो गच्छन् ददर्शाग्रे नदीं पापप्रणाशिनीम्। ... अनेकमुनिवृन्दानां बहुश्रेणिविराजिताम् PadmP. iv. 20. 8.

**अनेकमुनिसहस्र** (aneka-munisahasra) *n.* many thousands of sages अनेकमुनिसहस्रपरिवृते निर्वाणसमये कृततनुत्यागेन भगवता नाभितनयेन जनितमहिमानमष्टापदाभिधानमचलराज्यमत्रजम् TilaMañ. 405. 19.

**अनेकमुमुक्षुक** (anekamumukṣu-ka) *adj.* having many persons desiring emancipation जगदनेकमुमुक्षुकमीक्षते पुरुष एकतरो न तथेतरः SaṁkṣeŚā. 2. 90 (ii. 57. 20)

**अनेकमूर्खाख्यायिका** (anekamūrkhākhyāyikā) *f.* name of a section in the Bṛhatkathāmañjarī (containing stories about many fools) इत्यनेकमूर्खाख्यायिका BṛKathāMañ. 16. 582 (colophon)

**अनेकमूर्तयाग** (anekamūrta-yāga) *m.* offerings or worships of many idols अनेकमूर्तयागे तु प्रधानावाहनादिकान्(म्)। ... कुर्वीत PāraS. 6. 238.

**अनेकमूर्ति** (aneka-mūrti) *m.* one of the thousand epithets of Viṣṇu (*lit.* who has various incarnations) अनेकमूर्तिरव्यक्तः ... इति ... केशवस्य ... नाम्नां सहस्रम् MahāBhā. xiii. 135. 90 = ViṣṇuSa. 101. 90 (Bh. अवतारेषु स्वेच्छया लोकानामुपकारिणीः बह्वीर्मूर्तीर्भजत इति अनेकमूर्तिः)

**अनेकमूर्ति** (aneka-mūrti) *f.* **1** more than one form or part एकश्चानेकमूर्तिमत्प्रदेशवद्द्रव्यसंबन्धित्वं प्रदेशार्थः NyāyVār. 299. 12 (*on* ii. 2. 18); घट एकोऽनेकमूर्तिमद्द्रव्यसंयोगी प्रदेशवानेवमाकाशमित्यर्थः TātpaṬ. (Vā.) 454. 6 (*on* ii. 2. 17); **2** many idols अनेकमूर्तिपूजायां मुख्यमूर्त्यादितः क्रमात् ... नीराजनं चरेत् PāraS. 15. 1043.

**अनेकमूर्ति** (aneka-mūrti) *adj.* possessing many forms हरी रेमेऽनेकमूर्ती रुक्मिण्यादिभिरीश्वरः AgniP. 12. 55; नरेन्द्रमन्त्रिसामन्तचमूपैः परिवारितः। अनेकमूर्तिर्भूत्वेव नगर्या निर्ययौ नृपः TriṣaŚaPuC. i. 5. 266; तस्मिन्युधिष्ठिरः ...। कानने विहरन् रेजेऽनेकमूर्तिरिव स्मरः PāṇḍaC. 4. 92; (used as noun) (one) having many forms इमा अपि स्पष्टमनेकमूर्तेरष्टौ प्रसिद्धाः खलु मूर्तयोऽन्याः Vidvanmo. 8. 119.

**अनेकमूर्तित्व** (anekamūrti-tva) *n.* the state of being one having many forms यद्यप्यनेकमूर्तित्वमस्य तथाप्ययमीदृश एवेति न व्यज्यत इति अव्यक्तः

**अनेकरूपसंस्थान** (aneka-rūpasaṁsthāna) *adj.* assuming or having various forms and guises अनेकरूपसंस्थाना नानाप्रहरणाश्च ते। यक्षेन्द्रं मनुजश्रेष्ठ माणिभद्रमुपासते MahāBhā. iii. 140. 6; पुष्करा नाम ते मेघाः ... वर्षन्त्येते युगान्तेषु ... अनेकरूपसंस्थानाः पूरयन्तो महीतलम् VāyuP. i. 51. 41; BrahmāṇḍP. i. 22. 44.

**अनेकरूपाकृति** (aneka-rūpākṛti) *adj.* of various types and shapes अनेकरूपाकृतिभिर्हि बाणैः ...। स एव एकस्तव पुत्रसेनां जघान MahāBhā. ix. 23. 64.

**अनेकरूपाकृतिवर्णनाद** (aneka-rūpākṛtivarṇanāda) *adj.* of various forms, shapes, colours and sounds प्लवगाः...। अनेकरूपाकृतिवर्णनादाः ... नदन्ति Rāmā. iv. 540* (11)

**अनेकरूपाङ्घ्रिविलोचन** (aneka-rūpāṅghrivilocana) *adj.* possessing many forms, feet and eyes अनेकरूपाङ्घ्रिविलोचन त्वमनेकशीर्षश्रुतिबाहुजिह्व: GaṇeP. ii. 48. 11.

**अनेकरूपात्मकत्व** (anekarūpātmaka-tva) *n.* the state of having the nature of possessing more than one form अत्रैकैकस्यानेकरूपात्मकत्वे परस्परविरुद्धानामपि रूपाणामभेदे च न विप्रतिपत्तव्यम् SetuBa. 9. 16.

**अनेकरूपादिग्रहण** (anekarūpādi-grahaṇa) *n.* apprehension of various forms etc. (objects of sense-organs) त्वङ्मात्रमेव हि बुद्धीन्द्रियमनेकरूपादिग्रहणसमर्थमेकम् कर्मेन्द्रियाणि पञ्च सप्तमं च मनः Bhām. 389. 21 (*on* ii. 2. 10); VedāntKa. 256. 26 (*on* ii. 2. 10)

**अनेकरूपायोग** (anekarūpāyoga) *m.* untenability of more than one form or nature (संविदाम्) यासां भेद इष्यते तासां तस्याश्च भेदो न स्यात् ...। एकस्या अनेकरूपायोगात् IṣṭaSi. 15. 18.

**अनेकरूपालिखन** (anekarūpālikhana) *n.* graphic description or portraiture of various forms अनेकरूपालिखनप्रगल्भया ... वर्तिकयेव चिन्तया। स तामनाप्तेक्षणसंस्तवां पुरा लिलेख NavaSāC. 4. 6.

**अनेकरूपाविर्भाव** (anekarūpāvirbhāva) *m.* manifestation or appearance of various forms, i.e. sundry mimicry अनेकरूपाविर्भावकृतिज्ञानं कला स्मृता ŚukraNī.4(3).68.

**अनेकरूपिन्** (anekarūp-in) *adj.* [*f.* - iṇī] A of various kinds or types अतिभक्तिप्रभावेन बाध्यस्यानेकरूपिणः। संमुखीकरणादीनां कर्मणा संप्रयोजितम् PauṣkS. 32. 60; B of various forms गुणत्रयस्य यत्साम्यं साविद्यानेकरूपिणी JayāS. 4. 55; अनेन निहता दुष्टा बलिनोऽनेकरूपिणः GaṇeP. ii. 18. 36; अनेकरूपिणि विभौ ...। अमूर्तं विषरूपं च तत्र किं किं न संभवेत् GaṇeP. ii. 44. 9; C of various shapes अस्मात्तु येऽन्ये प्रासादाः स्मृतास्तेऽनेकरूपिणः SamarāSū. 55. 107.

**अनेकरूपोपादान** (anekarūpopādāna) *n.* assumption of many forms कति देवाः ... इत्युपक्रम्य त्रयश्च त्री च सहस्रेत्यनेकरूपोपादानमैश्वर्ययोगादुपन्यस्य ... देवतानिरूपणं ब्रह्मणा चोक्तम् BrahmSūBh. (Bhā.) 66. 12 (*on* i. 3. 33)

**अनेकरेखापक्ष** (anekarekhā-pakṣa) *m.* [Loc.] in the view of (having) more than one, i.e. two lines एकरेखात्मकभूपुरपक्षे सा रेखा परिगृहीतभूमेरन्तभागे लेख्या। ... ततश्चानेकरेखापक्षे रेखे तत्तदन्तरेव लेख्ये संपद्येते SetuBa. 335.1.

**अनेकरेणुपिञ्जर** (anekareṇu-piñjara) *adj.* tawny due to many (particles of) pollen dust अनेकरेणुपिञ्जरम् ... पुनातु जाह्नवीजलम्। मां बिन्दुभिः SaṃgīRa. i. 279. 5 (1(8). 14)

**अनेकरोग** (aneka-roga) *m.* several diseases काशीनाथाभिधानः ...। येनानीय ... द्विजचरणरजो मूर्ध्नि विन्यस्तमात्रम् ... सिद्धौषधमिव ... अनेकरोगान् जहार Vidvanmo. 1. 5.

**अनेकरोगविहत** (anekaroga-vihata) *adj.* struck or affected by several diseases धिगत्यन्ताशुचिं देहम् ... अनेकरोगविहितम् (v.l. °विहतम् BJP. Ed.) PadmP. (Ra.) 39.118.

**अनेकरोगविहित** (anekaroga-vihita) *adj.* possessing or full of several diseases धिगत्यन्ताशुचिं देहम् ... अनेकरोगविहितम् PadmP. (Ra.) 39. 118.

**अनेकरोगसंपूर्ण** (anekaroga-sampūrṇa) *adj.* full of several diseases स्त्रियः खुर्निशि भोजनात्। ... अनेकरोगसंपूर्णमलिनाः PadmP. (Ra.) 14. 296.

**अनेकरोगादि** (anekarogādi) *adj.* several diseases etc. तपोधनानां व्रतशीलशालिनामनेकरोगादिनिपीडितात्मनाम्।... विधीयते व्यापृतिरुज्ज्वलादरात् SubhāRaSam. 889.

**अनेकरोगानुगत** (anekarogānugata) *adj.* followed, i.e. affected by several (minor) diseases अनेकरोगानुगतो बहुरोगपुरोगमः। ... दुर्निवारः शोषो व्याधिः SuśruS. vi. 41. 3 (comm. उपद्रवसंज्ञकाः तैरनुगत आश्रितः) ... अनेकरोगानुगत ... ...। राजयक्ष्मा AṣṭāHṛ. iii. 5. 1; Jīvān. 394. 7.

**अनेकरोगिन्** (anekarog-in) *adj.* having several diseases कुम्भीपाकरौरवादिषु स्थानेषु दुःखान्यनुभूयेह जातानामिमानि लक्षणानि भवन्ति। तद्यथा ब्रह्महा कुष्ठी गोघ्नश्चान्धोऽनेकरोगिणश्च ŚaṅkhaLiDS. 375.

**अनेकरौद्रसत्त्व** (aneka-raudrasattva) *m., n.* various types of ferocious beasts बह्वपायमिदं वनमनेकरौद्रसत्त्वसंकटत्वात् PañcT. 1. 54 (28) (45. 11); Pañcā. 21. 20.

**अनेकर्णसमवाय** (anekarṇa-samavāya) *m.* accumulation of several debts or liabilities यस्त्वनेकर्णसमवायाद्युगपदनेकधनिकैः दुःसाधः स कथं दाप्यः SmṛtiCan. iv. 390. 12.

**अनेकर्त्विक्कार्य** (anekartvik-kārya) *n.* duty (to be performed) by more than one priest ऋत्विक्समास एकस्यर्त्विजोऽनेकर्त्विक्कार्यसंबन्धः MayūMāli. 337. 16 (*on* ii. 8. 10)

**अनेकर्त्विगाश्रिता** (anekartvig-āśritā) *adj.* (*f.*) resorted to, i.e. performed by more than one priest वैहारिकीनामानेकर्त्विगाश्रितानामेकक्रियाणामुपदेशः NyāyMañ. i. 238. 31.

**अनेकर्षि** (anekarṣi) *m.* several seers अनेकऋषि(?कर्षि)मतानुसारिणस्त्रयः पक्षा अभिहिताः BālamBha. i. 265. 23 (*on* 1. 89)

**अनेकर्षिकर्तृकत्व** (anekarṣikartṛka-tva) *n.* the state of having several seers as authors (*lit.* agents) वेदानामनेकऋषि(?कर्षि)कर्तृकत्वे ... ऋषीणां स्रष्टृत्वानुपपत्तेः ŚivārkaMaDī. i. 464. 25 (*on* i. 3. 28)

**अनेकर्षिगण** (anekarṣi-gaṇa) *m.* group of many seers भगवन्तम् ... अनेकऋषि(?कर्षि)गणमध्योपविष्टं पप्रच्छ रोमपादः पालकाप्यम् Hastyāyur. 618. 24 (4. 7)

**अनेकलक्षण** (aneka-lakṣaṇa) *adj.* A (used as noun) (thing) possessing various characteristics or symbols नानेकलक्षणैरेकभावनिष्पत्तेः NyāySū. iv. 1. 35; B of various kinds or types अनेकलक्षणार्थस्य प्रसिद्धस्याभिधानतः। संशयादिप्रसङ्गः किं स्यात् NyāyVi. 2. 458 (comm. क्रमाक्रमानेकरूपस्य अर्थस्य चेतनेतरवस्तुनः)

**अनेकलक्षण** (aneka-lakṣaṇa) *n.* 1A more than one rule अपवादो नामानेकलक्षणप्रसङ्गः MahāBh. ii. 42. 19 (*on* iii. 1. 32); 1B many rules यत्रानेकलक्षणसंनिपाताभावस्तत्रानर्थकं कात्पूर्वग्रहणमिति अनेकलक्षणसंनिपाते कात्पूर्वग्रहणं कालावधारणार्थं विज्ञायते Pradī. v. 136B. 3 (*on* vi. 1. 135); 2A more than one definition किमेतद्वाक्यमेकलक्षणाभिप्रायम् उतानेकलक्षणाभिप्रायम् NyāyKu. 187. 17; 2B many definitions समासकरणे ... न चानेकलक्षणोक्तिवैयर्थ्यम् NyāySu. (Ja.) 96B. 13 (*on* i. 1. 2); 97A. 2 (*on* i. 1. 2); 3 many characteristics (ब्रह्मणः) अनेकलक्षणाभिन्नस्यानेकत्वप्रसङ्गः NyāySu. (Ja.) 107A. 8 (*on* i. 1. 2)

**अनेकलक्षणा** (aneka-lakṣaṇā) *f.* A indication in various senses तत्तद्भावापन्नं ब्रह्मैव सर्वत्र कारणमिति नानेकलक्षणा AṇuBh. 141. 8 (*on* ii. 3. 5); B implication (in the case) of more than one word ऐक्यपरतानेकलक्षणया कुतः Nyāyāmṛ. 595B. 11.

**अनेकलगुडप्रहार** (aneka-laguḍaprahāra) *m.* many strokes or beatings with stick (महामत्स्यः) यद्वविष्यस्तु अनेकलगुडप्रहारजर्जरितशरीरः पञ्चत्वमुपनीतः Tantrākhyā. 38.6; Pañcā. 87. 19.

**अनेकलता** (aneka-latā) *f.* several creepers अनेकलता वसन्तोद्भवैः कुसुमैर्वनलीलायां प्रफुल्लिता नम्रा भवन्ति SāmaraU. 229. 12.

**अनेकलताग्रथिता** (anekalatā-grathitā) *adj.* (*f.*) woven or thickened with several creepers तस्मिन् कदम्बवने निर्भरसेचनरससंकुलिता अनेकलताग्रथिताः सुवर्णालवालश्रेणयो ग्रथिताः जलपुष्करिण्य इवागाधजलपूरिता एवासते SāmaraU. 267. 15.

**अनेकलतान्तर** (anekalatāntara) *n.* [Loc.] in the interior of several creepers सूक्ष्मलतान्तरे शय्योपकरणानि। अनेकलतान्तरे रासक्रीडा भवतितराम् SāmaraU. 283. 17.

**अनेकलब्धि** (aneka-labdhi) *adj.* having many acquisitions (of supernatural powers) वज्रेण विचक्रेऽनेकलब्धिना। सहस्रपत्रं कमलम् PariPar. 12. 286.

**अनेकलब्धिमत्** (anekalabdhi-ma(n)t) *adj.* endowed with many accomplishments श्रीवज्रस्वामी ... अनेकलब्धिमान् सहजमप्रतिरूपं रूपं विकुर्व्य सौवर्णं सहस्रपत्रे निषद्य देशनां विधाय राजादिजनतामामोदयत् ViviTīKa. 69.28.

**अनेकलब्धिवत्** (anekalabdhi-va(n)t) *adj.* (irr.) endowed with many accomplishments श्रीआचार्यनागहस्तिगुरूणामनेकलब्धिवतां पुत्रेच्छया पादप्रक्षालनजलं ... PrabhāCa. 92. 16.

**अनेकलयम्** (anekalayam) *adv.* with various pauses or stops, with

different rhythms (in music) विहगाः ... इह गाः कलयन्त्यनुक्षणमनेकलयम् ŚiśuVa. 4. 36 (comm. अनेके बहुविधा लया विच्छेदा यस्मिन् कर्मणि तद्यथा तथा गाः वाचः); SaraKaṇṭhā. 204. 23 (comm. कूजितक्रियान्तरालकालो द्रुतमध्यविलम्बितात्मानेको लयः)

**अनेकलास्यसंयुक्त** (anekalāsya-saṁyukta) *adj.* endowed with, i.e. performing various dances (गणाः) अनेकलास्यसंयुक्ता वीरभद्राग्रतोऽभवन् SkandP. i (1). 3.61.

**अनेकलिङ्ग** (aneka-liṅga) *n.* **1A** more than one (image of Śiva in the form of) phallus आत्मार्थलिङ्गेषु स्वयंभुवं परार्थके। कुर्यादनेकलिङ्गेषु चैकलिङ्गं न कारयेत् MānaSā. 52. 139; 52. 60; **1B** phallus associated or set with many (gods), i.e. many phalli चलितभिन्नादिदोषदुष्टमनेकलिङ्गं च वर्ज्यम् ĪśānŚiPa. ii. 19. 23 (2); **2A** many genders अनेकलिङ्गसंभवेऽपि सौकुमार्यात् कविभिः स्त्रीलिङ्गमेव प्रयुज्यते VakroJī. 36.1; **2B** several indications or characteristics लिङ्गद्वयादनेकलिङ्गानां प्रबलतया तदनुसारेणैवाहय्यत्वाग्राह्यत्वयोर्नेतव्यत्वात् ŚivārkaMaDī. i. 380. 20 (*on* i. 2. 22); **3** characteristics of many अनेकलिङ्गसंदोहे बलवत्कस्य किं भवेत् Bhām. 157. 2 (*on* i. 1. 28)

**अनेकलिङ्ग** (aneka-liṅga) *adj.* **1** having many genders अनेकलिङ्गत्वेऽपि पदार्थस्य स्त्रीलिङ्गविषयः प्रयोगः क्रियते VakroJī. 114. 5; **2** having many symptoms or indications अनिलपित्तकफशोणितानि ... रोगाननेकलिङ्गानुत्पादयन्ति Hastyāyur. 278. 10 (2. 55)

**अनेकलिङ्गोपन्यास** (anekaliṅgopanyāsa) *m.* explanation or statement of many indications or characteristic marks इदमेव चानेकलिङ्गोपन्यासे बीजम् MīmāKau. ii. 117. 14 (*on* ii. 4. 8)

**अनेकलिपिज्ञ** (anekalipi-jña) *adj.* (used as noun) knower of many scripts सलेख्येन समानेन लेख्येन युक्तिभिश्चानेकलिपिज्ञेन कृतं स्वलेख्यं शुद्धिं न यातीत्यध्याहार्यम् Aparā. 691. 20 (*on* 2. 92)

**अनेकलीला** (aneka-līlā) *f.* **1** many playful activities कोऽपि वेत्ति न ते कूटं कर्म यत्त्वं करोषि हि। ... अनेकलीलाविर्भावं कुर्वन् ĀdiP.16.22; **2** more than one playful activity एकस्यैव भक्तस्य पौर्वापर्येणानेकलीलासंबन्धित्वं श्रूयते AṇuBh. 217. 11 (*on* iii. 3. 9)

**अनेकलीलाविलास** (aneka-līlāvilāsa) *m.* many gestures of amorous play अहो विचित्रता कार्यपरिणतेर्या स्वशुद्धान्तसौधाबद्धवसतिरनेकलीलाविलासनिर्भरं भोगसुखमनुभवन्ती ... मया द्रष्टव्या (मलयसुन्दरी) TilaMañ. 380. 6.

**अनेकलोक** (aneka-loka) *m.* **1** many worlds अनेकलोकान् स महत्तमादीन् भुक्त्वा ... विष्णोः परमं पदम् ... प्राप्नोति MatsyaP. 58. 56; **2** many people लहरभूपालो निर्ययौ नगरान्तरात्। अनेकलोकसंयुक्तः RājTa. (Prā.) 645; 756.

**अनेकलोकधातु** (aneka-lokadhātu) *m.* many world regions or world-systems तेष्वपि तेषामज्ञानम्। अनेकलोकधात्वन्तरितदेशत्वात् Sphuṭā. i. 5. 17 (*on* 1. 1) [cf. **लोकधातु**, DBHS.]

**अनेकलोकप्रलय** (aneka-lokapralaya) *m.* many dissolutions or destructions of worlds मृकण्डुपुत्रेण ...। अनेकलोकप्रलयाः समीक्षिताः PadmP. vi. 236. 97.

**अनेकलोकाद्भुतरचना** (anekalokādbhutaracanā) *f.* extra-ordinary or marvellous creation of many worlds अनेकलोकाद्भुतरचनायुक्तब्रह्माण्डकोटिरूपस्य ... उत्पत्तिस्थितिभङ्गकरणं न लौकिकम् AṇuBh. 10. 5 (*on* i. 1. 2)

**अनेकलोकाशय** (anekalokāśaya) *m.* intention of many people अस्ति ... अनेकलोकाशयविभक्तरागाभिनिवेशविलासिनीकुचपीठमर्दकपीठमर्दकविटविदूषकजना वटवनाभिधाना राजधानी YātrāPra. 1. 12 (5)

**अनेकलोकोत्पादितप्रत्यया** (anekalokotpādita-pratyayā) *adj.* (*f.*) who has created faith among many people (श्रीसुदत्ताचार्यः) अनेकलोकोत्पादितप्रत्ययायाः पुरदेव्याः सिद्धायिकायाः ... उद्यानम् अवलोक्य YaśasCam. i. 107. 1.

**अनेकलोचन** (aneka-locana) *n.* many eyes माहेन्द्री त्वगनेकलोचनपदैः कीर्णा पताका कृता TripuḌi. 3. 5.

**अनेकलोचन** (aneka-locana) *m.* epithet of god Śaṅkara (*lit.* having many, i.e. three eyes) शंकरे ... सुभगोऽनेकलोचनः ŚeṣaNā. 1585; गङ्गाधरः ... सुभगोऽण्डैक (v.l. अनेक)लोचनः KalpaK. 390. 93 [name of Indra, APTE; name of the Supreme being, he being said to be *sahasrākṣaḥ, sahasrapāt* etc., APTE.]

**अनेकवक्तृवचन** (anekavaktṛ-vacana) *n.* statements of more than one speaker एकस्य ग्रन्थस्यानेकवक्तृवचनसंदर्भमयत्वे प्रमाणाभावात् AbhinBhā. i. 9. 7 (*on* 1. 6)

**अनेकवक्त्र** (aneka-vaktra) *adj.* **A** having many faces लिङ्गेन च पुनरुद्दिष्टः शूलः शंकरवल्लभः। संभूतोऽनेकवक्त्रस्तु हर्षाद्विस्मितमानसः SkandP. v(2). 51. 28; **Bi** having many mouths, i.e. hoods प्रक्षीणक्लेशराशिर्विषमविषधरोऽनेकवक्त्रः सुभोगी। ... देवोऽहीशः स वोऽव्यात् YogBh. 1. 8 (*on* 1. 0); शेषो न वर्णने शक्तोऽनेकवक्त्रो न चात्मभूः GaṇeP. ii. 52. 38; **Bii** having more than one mouth, i.e. head; स स्तौति ... एकवक्त्रोऽनेकवक्त्रः ... कर्मणां परमीशं च स्तोतुं को वाप्यनुत्तमम् PāñcaRā. (Nā.) i. 12. 41.

**अनेकवक्त्रनयन** (aneka-vaktranayana) *adj.* having many mouths and eyes हरिः। दर्शयामास पार्थाय परमं रूपमैश्वरम्। अनेकवक्त्रनयनम् MahāBhā. vi. 33. 10 = BhagGī. 11. 10; JayāS. 21. 230; अनेकवक्त्रनयनो ज्वलज्ज्वलनभीषणः। वीरभद्र इति ख्यातः करपादायुतैर्युतः MatsyaP. 72. 12; PadmP. v. 24. 27; अनेकवक्त्रनयनम् ... रूपं पाशुपतास्त्रस्य प्रोक्तम् ĪśānŚiPa. ii. 12. 92.

**अनेकवक्त्रवत्** (anekavaktra-va(n)t) *adj.* having many faces सिंहगो बर्हिगो वापि गजास्योऽनेकवक्त्रवान् GaṇeP. i. 91. 42.

**अनेकवक्त्रशिरस्** (aneka-vaktraśiras) *adj.* having many faces and heads (भानुः) दर्शयामास तद्रूपम् ...। अनेकवक्त्रशिरसम् BhaviP. 239A. 24 (i. 160.29)

**अनेकवक्त्रुच्चारित** (anekavaktṛ-uccārita) *adj.* pronounced or uttered by many speakers अनुनासिकादीनां तु धर्माणां युगपदनेकवक्त्रुच्चारिते वर्णे समवेतानां कथमनेकवर्णविषयत्वम् ŚāstrDī. 93. 10 (*on* i. 1. 5); युगपदनेकवक्त्रुच्चारितस्य गकारस्य नानात्वम् NyāyRa. 731. 20 (*on* 6. 11)

**अनेकवचन** (aneka-vacana) *adj.* expressive of many (senses or meanings) आत्मशब्दो ह्यनेकवचनः NyāyKu. 114. 19.

**अनेकवचन** (aneka-vacana) *n.* **1** many (unconnected) speeches आह्वानं च निवारणनिर्माणे चाप्यनेकवचः (v.l. आवाहने निवारणनिर्दशने चाप्यनेकवचने च)। ... त्रिपताकहस्तजानि ... कर्माणि NāṭyaŚā. 9. 51; **1B** many statements, cf. अनेकवचनविरोध **1**; **2A** (case-suffix indicating) plural number पदार्थतावच्छेदकभेदेन एकशेषानेकवचनयोरुक्तिः GuruCandr. i. 100. 15; **2B** non-singular or plural affix ईश्वरस्य बहुवचनवाच्यत्वे भेदः स्यादित्यत आह। एकस्मिन्ननेकवचनप्रयोगं संप्रतिपन्नस्थले दर्शयति TattvPrakā. 116B. 6 (*on* ii. 3. 22) [dual, APTE]; **3** the expression '*aneka*' (more than one) अनेकवचनमुपसर्जनार्थम् LaŚabdeŚe. i. 529. 12.

**अनेकवचनविरोध** (anekavacana-virodha) *m.* **1** contradiction with many (Smṛti) statements जाबालयमवचनाभ्यां प्रतिषिद्धानाम् ... अप्यनुष्ठानार्थम्। अनेकवचनविरोधात् HārLa. 6. 14; मनुवचनम् ... स्त्रीणाम् ... अपत्य उत्पन्ने देवरेण धनलोभो न कर्तव्यस्तस्यैव तद्धनं समर्पयेदित्येवमर्थपरं व्याख्येयम् अनेकवचनविरोधात् Subodhi. 64. 25 (*on* 2. 136); **2** contradiction with plural case-suffix 'अनियतसंख्यस्त्रीधनमङ्गीकृत्य ... प्राप्तं शिल्पैस्त्विति तेन न तत् स्त्रीधनं सौदायिकं तु तथा' इति तदपास्तम्। अनेकवचनविरोधापत्तेः BālamBha. ii. 256. 9 (*on* 2. 144)

**अनेकवचस्** (aneka-vacas) *n.* many (unconnected) speeches आह्वानं च निवारणनिर्माणे चाप्यनेकवचः।... त्रिपताकहस्तजानि ... कर्माणि NāṭyaŚā. 9.51.

**अनेकवडवामुखसहस्र** (aneka-vaḍavāmukhasahasra) *n.* several thousands of submarine fires (*lit.* one having faces of mares) अन्यथा त्वामाग्नेयास्त्रप्रतापितमनेकवडवामुखसहस्रपरिक्षीणतोयं सद्यः करिष्यामि Tantrākhyā. 38. 23; PañcT. 1. 127 (47) (138. 6)

**अनेकवत्** (aneka-vat) *adv.* like more than one आदित्य एक एवानेकेषु जलभाजनेषु अनेकवत् प्रतिभासते ViṣṇuSaBh. 46. 7 (*on* 18); हगेका सर्वभूतेषु भाति दृश्यैरनेकवत् NaiṣkaSi. 74. 8; 89. 5; एकोऽप्यनेकवत्तैस्तु सैन्यैः पक्षीशसंयुतः। ददृशे हगुरालोको जलबिम्बितसूर्यवत् SamarāSam. 7. 310.

**अनेकवदनीभूत** (anekavadanī-bhūta) *adj.* which has become the possessor of many mouths स्तोतुं तमाद्यमर्हन्तं पर्यैर्भृङ्गनिनादिभिः। अनेकवदनीभूत इव पद्माकरो महान् TriṣaŚaPuC. i. 2. 222.

**अनेकवधूसहित** (anekavadhū-sahita) *adj.* accompanied by many wives or spouses अनेकवधूसहितः ... कापालिकनामा योगी ... बन्धुश्रीगृहमागतः SamyaKau. 43. 1.

**अनेकवनशोभाढ्य** (anekavanaśobhāḍhya) *adj.* rich in grandeur of many groves गतो भूपः ...। बाणस्य तत्पुरश्रेष्ठम् ... अनेकवनशोभाढ्यम् SkandP. v(3). 26. 61.

**अनेकवनितासख** (anekavanitā-sakha) *m.* [P. v. 4. 91] friend of many ladies स त्वनेकवनितासखोऽपि सन् पावनीमवलोक्य संततिम् RaghuVa.19.53.

**अनेकवनेचरनिशाचर** (aneka-vanecaraniśācara) *m.* many foresters and demons (भीमः) अनेकवनेचरनिशाचरैः। आश्वासभवनं यक्षभवनं दिव्यमैक्षत PārśvC. 7. 638.

**अनेकवरदातृ** (anekavara-dātṛ) *adj.* giver or bestower of many boons नमः ... अनेकवरदात्रे ते (गणेशाय) GaṇeP. ii. 37. 7.

**अनेकवरिवस्या** (aneka-varivasyā) *f.* many kinds of worships सुरधः ...। अनेकवरिवस्याभिः श्रीरामं समतोषयत् PadmP. iv. 53. 29.

**अनेकवर्ग** (aneka-varga) *adj.* consisting of many divisions यास्यन् पुरो रक्ष्यमनेकवर्गम् ... बलं विदध्यात् NītiSā. 16. 17.

**अनेकवर्ण** (aneka-varṇa) *adj.* [*f.* - ā] 1A having various colours, variegated, multi-coloured गवामनेकवर्णानां क्षीरं स्यादेकवर्णकम् PārāŚi. 154; नभःस्पृशं दीप्तमनेकवर्णम् ... दृष्ट्वा हि त्वाम् MahāBhā. vi. 33. 24 = BhagGī. 11. 24 (*but* Śaṅ. अनेके वर्णाः भयंकराः यस्मिन् त्वयि तं त्वाम्); दिव्यां मालामुरसानेकवर्णां समुद्वहन्तम्। अपश्यमेनम् MahāBhā. xiii. 15. 12; अनेकवर्णं पवनावधूतं भूमौ पतत्याम्रफलं विपक्वम् Rāmā. iv. 27. 19; अनेकवर्णैः श्वभिः ... अनुगम्यमानम् ... शबरसेनापतिमपश्यम् Kād. 31. 2; (कुमारः) अनेकवर्णान् रूप्यधातून् ... अवलोकमानः ... चीरवाससं ददर्श AvantiKa. 225. 15; हिरण्मयं दीप्तमनेकवर्णम् ... पुरुषं भजन्ते (कृतिनः) ŚāraTi. 25. 58; मूर्छद्भिरन्योन्यमनेकवर्णैर्घनाविलेऽह्नीव सहस्रभासम्। तन्वानमिन्द्रायुधजालमुग्रैः ... ददर्श रामः ... अण्डजेशम् RāmC. 32. 2; शरीररक्षाधिकारनियुक्तानां वीरपुरुषाणामन्योन्यलग्नाभिरनेकवर्णगुणलवनिकाभिः ... स्थपुटितावकाशं स्वावासमव्रजन्(?म्) TilaMañ. 123. 6; प्रकृतिश्चास्यानेकवर्णा मनुष्यसवर्णा च YaśasCam. ii. 364. 16; वासांस्यनेकवर्णानि महार्हाणि GaṇeP. i. 1. 35; अनेकवर्णैः शितिकान्तिभिः ... महांशुकैस्तेन जिनेश्वरोऽर्चितः VasaViKā. 13. 15; अनेकवर्णो भवति ...। होतृदाही च यो वह्निर्द्विजानां क्षयमादिशेत् Hastyāyur. 714. 15 (4. 36); कृकलासोऽनेकवर्णे जन्तुभेदे NānārthaMa. 1931; समानयेत् .... कन्दुकमनेकवर्णम् KandaCū. iii. 3. 11; पयस्विन्याः पुत्रम् ... अनेकवर्णम् ... उत्सृजेत् BālamBha. i. 583. 3 (*on* 1. 252); अनेकवर्णं वियतीन्द्रचापम् SiddhāTaVi. 35. 18; 1B (used as noun) (deity) of various colours मध्यजिह्वायै अनेकवर्णायै ... स्वाहा LiṅgaP. ii. 25. 57; 1C (used as noun) (material) of various colours (विषे) पक्वाशयगते पुनः। अनेकवर्णं वमति AṣṭāHṛ. i. 7. 23; 2 of various types or species अनेकवर्णैः ... महाद्रुमैः ... तपःप्रधानाः ... शृङ्गं गिरेश्चिन्तयितुं न शेकुः MahāBhā. iii. 161. 7; ततस्त्वनेकवर्णाः स्युश्चरवः प्रतिदैवतम् MatsyaP. 58. 14; अनेकवर्णैः कुसुमैर्गन्धैः ... अर्चयित्वारभेत ताम् SamarāSū. 72. 12; 3 (used as noun) (substitution) consisting of various syllables or letters अनेकवर्णः सर्वस्य। अयं विधिः षष्ठ्योक्तस्य सर्वस्यैव स्यात् SiddhaHe. vii. 4. 107 (Vṛtti अनेकवर्ण आदेशः) [involving more than one (unknown) quantity (the unknown quantities x, y, z, etc. being represented in Sanskrit by colours *nīla, kāla* etc.), Apte]

**अनेकवर्ण** (aneka-varṇa) *m.* 1 various colours अनेकवर्णचारुभिर्दिव्यांशुककलापैः पल्लवितम् ... कल्पतरुखण्डमपश्यत् TilaMañ. 213. 22; YaśasCam. ii. 174. 4; 2 many castes पादपः ... प्रजापतिरिव प्रदर्शितानेकवर्णप्रसूतिः YaśasCam. ii. 174. 4 (comm. ब्राह्मणक्षत्रियवैश्यशूद्राणां प्रसूतिमुत्पत्तिं प्रदर्शयति); 3 various letters or syllables ध्वनयः ... भासयन्ति... अनेकवर्णपरिमाणस्थानसंस्थानभेदम् Bhām. 244. 16 (*on* i. 3. 28); 4 field-mouse महामूषस्तु ...। अनेकवर्णो वनजः KalpaK. 324. 58 (pw.) [(in algebra compounded with various words to denote) many unknown quantities (colours) representing x, y, z, etc., MW.]

**अनेकवर्णकचित्रित** (anekavarṇaka-citrita) *adj.* painted with various colours अन्येद्युश्च रथकारः ... अनेकवर्णकचित्रितम् ... गरुडयन्त्रमादायोपस्थितः Pañcā. 50. 2.

**अनेकवर्णकल्पना** (anekavarṇa-kalpanā) *f.* assumption of many letters or syllables वीचीतरङ्गादिन्यायेनानेकवर्णकल्पनायां गौरवमपास्तम् VaiyāBhū. 256. 26 (*on* 68)

**अनेकवर्णकुसुम** (anekavarṇa-kusuma) *n.* flower of various colours रम्योऽयमनेकवर्णकुसुममञ्जरीमञ्जुलतररतरुवनाभोगः DaśKuC. 107. 18.

**अनेकवर्णकृत** (anekavarṇa-kṛta) *adj.* caused by various letters यत्र संयोगादनन्तरं सर्वनामस्थानं तत्र यद्युपधायाः सर्वनामस्थानस्य चानेकवर्णकृतं व्यवधानं तथापि दीर्घत्वं भवत्येव Nyās. ii. 503. 9 (*on* vi. 4. 10)

**अनेकवर्णगुणन** (anekavarṇa-guṇana) *n.* multiplication of many unknown quantities, MW., Apte.

**अनेकवर्णगोचर** (anekavarṇa-gocara) *adj.* referring to various letters or syllables स्मरणस्य चैकस्यैव युगपदनेकवर्णगोचरस्य ... अक्रमत्वात् NyāyRaMā. 75. 21.

**अनेकवर्णज्वाल** (anekavarṇa-jvāla) *adj.* of flame of various colours वह्निस्तु सविषमन्नं प्राप्यैकावर्तो रूक्षमन्दार्चिरिन्द्रायुधवदनेकवर्णज्वालो भृशं चटचटायते AṣṭāSaṁ. i. 46. 7 (1. 8)

**अनेकवर्णता** (anekavarṇa-tā) *f.* the state of having various colours तया

च संपिण्डितसुरचापपरमाणुनिर्वहमनोहराकारमनेकवर्णतया क्वचिद्बधूलोचनयुगमिव कृष्णतारोचितम् ... अभिनवं मठमैक्षिष्ट TilaMañ. 222. 2.

**अनेकवर्णत्व** (anekavarṇa-tva) *n.* the state of being many castes अनेकवर्णत्वोद्देशेन विधीयमानमुपनयनं दृष्टान्तीकृतम् CaturCin. ii (1). 5. 18.

**अनेकवर्णधर** (anekavarṇa-dhara) *adj.* [*f.* - ā, ī] having or possessing of various colours शक्रकुमार्यः कार्याः ... एतासाम्। प्रीतैः कृतानि विबुधैर्यानि पुरा भूषणानि सुरकेतोः। तानि क्रमेण दद्यात् ... रसना स्वयंभुवा शंकरेण चानेकवर्णधरी BṛSaṁ. 43. 42; किमेतस्यैव समयवशादनेकवर्णधरः कोऽपि मणिदलविशेषः UdaySuKa. 28. 19; 29. 8; धवला भस्मनः प्रलेपेन, कपिला जटाभिः, आपाटला जटानामग्रकोटिभिः आवरणवल्कलेन च हरितकान्तिभिरित्यनेकवर्णधरा मूर्तिरिव गारुडी ... तपस्विनी ... निर्जगाम UdaySuKa. 69. 7; तस्याः ... अनेकवर्णधरेण विचित्रयन् रणरणकमिन्द्रचापेन ... विवेश ... अम्भोमुचां कालः UdaySuKa. 103. 11.

**अनेकवर्णध्वनि** (anekavarṇa-dhvani) *m.* sounds of various letters अनेकवर्णध्वनिकल्पने मानाभावात् VaiyāSiMañ. 227. 4.

**अनेकवर्णन** (aneka-varṇana) *n.* various descriptions कायोत्सर्गः पारितः श्रीसंघेन। प्रतिष्ठा जाता। ऊदावसहीति नाम जज्ञे।- इत्याद्यनेकवर्णनानि तथापि किंचित् खण्डितसंबन्धा लिख्यन्ते PurāPraSaṁ. 27. 3.

**अनेकवर्णनिचय** (anekavarṇa-nicaya) *m.* collection or store-house of various colours मणिरत्नमयं चित्रम् ...। अनेकवर्णनिचयम् ... तं विद्धि मेरुं नगोत्तमम् VāyuP. i. 34. 65.

**अनेकवर्णपद** (aneka-varṇapada) *n.* various letters and words अनुभवोऽपि च वाक्यात्मानमेकमवयविनमनेकवर्णपदव्यासङ्गिनमङ्गप्रत्यङ्गवर्तिनमिव देवदत्तमनुभवेत्प्रत्यस्तमितवर्णपदविभागं वा TattvBi. 9.3.

**अनेकवर्णभेद** (anekavarṇa-bheda) *m.* [Inst.] by way of difference in various colours रसे रसायने चैव योज्यं वज्राभ्रकं प्रिये। अनेकवर्णभेदेन तच्चतुर्विधमभ्रकम्। रक्तं पीतं च हेमार्थे कृष्णम् ... शुक्लं च Rasā. 6.8.

**अनेकवर्णमेघौघ** (anekavarṇa-meghaugha) *adj.* accompanied by groups of clouds having various colours अनेकवर्णमेघौघासंगीताम्बरदिक्चयाः। विवान्ति वाता हृदयं हारयन्तीव वेगिनः ŚivaP. ii (2). 22. 3 (95A. 7)

**अनेकवर्णराग** (aneka-varṇarāga) *adj.* 1 possessing various hues of colours मध्यधवलभासेनेन्द्रायुधेनेवातिदीर्घेण लोचनयुगलेन परितो महामण्डलमिवानेकवर्णरागमालिखन्तं सितपीतलोहितपताकावलीशबलं शिवबलिमिव दिक्षु विक्षिपन्तम् ... कलेर्भगवन्तं साक्षादिव विरूपाक्षं भैरवाचार्यं ददर्श HarṣaC. 155. 9 (Bālabodhinī अनेके वर्णरागाः शुक्लादयः); 2 (anekavarṇa-rāga) having affection for many castes, HarṣaC. 155. 9 (Bālabodhinī अनेकेषां वर्णानां ब्राह्मणादीनां प्रेमयुक्ताः)

**अनेकवर्णरुचिर** (anekavarṇa-rucira) *adj.* 1 charming with various colours सपुलकाभ्यां दोर्म्यामात्मकर्णादपनीयानेकवर्णरुचिरं संदेशमिव कर्णाभरणमस्य कर्णे कृत्वा कण्ठागतबाष्पगद्गदिकागृह्यमाणाक्षरमवादीत् Kād. 264. 15; 2 charming with various syllables, Kād. 264. 15.

**अनेकवर्णरूप** (aneka-varṇarūpa) *adj.* having various colours and forms अनेकवर्णरूपं च ...। दृष्ट्वैवं देवदेवस्य रूपं भानोर्महात्मनः BhaviP. 227B. 10 (i. 153. 47)

**अनेकवर्णवत्** (anekavarṇa-va (n) t) *adj.* possessing various colours अग्निप्रतिष्ठितं लिङ्गं तत्रास्तेऽनेकवर्णवत्। तद्देवदर्शनादेव सर्वक्रतुफलं लभेत् BrahmP. 98. 22.

**अनेकवर्णवसन** (anekavarṇa-vasana) *n.* i garment of various colours भागभागार्पितानेकवर्णवसनवेष्टितोष्णीषम् ... वधायथकधर्मोत्तरपथं बलम् YaśasCam. i. 465. 2; ii (characteristic of) the Bhūyiṣṭha type of garment of Lord Kṛṣṇa युगं चतुष्कं भूयिष्ठं वसनं त्रिविधं हरेः। ... अनेकवर्णवसनं भूयिष्ठं कथितम् BhaktiRaSi. ii. 1. 140.

**अनेकवर्णविषय** (anekavarṇa-viṣaya) *adj.* referring to various letters किं पुनर्हलित्येवमादीनामनेकवर्णविषयाणां संज्ञाशब्दानाम् Nyās. i. 153. 16 (*on* i.2.10)

**अनेकवर्णविषयता** (anekavarṇaviṣaya-tā) *f.* the state of referring to various letters न च संस्कारसाहित्यादनेकवर्णविषयता NayaVi. 176. 1 (*on* i.1.5)

**अनेकवर्णव्यवकलन** (anekavarṇa-vyavakalana) *n.* substraction of unknown quantities, Apte.

**अनेकवर्णव्यवधान** (anekavarṇa-vyavadhāna) *n.* intervention or interruption by various letters अनेकवर्णव्यवधानेऽपि लघुनि स्यादेवेति मतम् KātanVṛ. *on* iii. 3. 35.

**अनेकवर्णसमीकरण** (anekavarṇa-samīkaraṇa) *n.* [Math.] equation with various letters of alphabet (indicating unknown quantity) एकवर्णसमीकरण-

मुक्त्वा ... क्रमप्राप्तमनेकवर्णसमीकरणम् ... आह BījGa. 9.134.

**अनेकवर्णस्मृति** (anekavarṇa-smṛti) *f.* recollection of various letters संस्कारैः संभूयानेकवर्णस्मृतिः कृतेति युक्तम् NayaVi. 180. 6 (*on* i. 1. 5); 181.1 (*on* i. 1. 5)

**अनेकवर्णहार** (aneka-varṇahāra) *m.* division of unknown quantities, APTE.

**अनेकवर्णाकृति** (aneka-varṇākṛti) *adj.* having various colours and shapes अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम् BṛSaṁ. 36.5.

**अनेकवर्णाञ्चित** (anekavarṇāñcita) *adj.* full of, i.e. adorned with various colours अनेकवर्णाञ्चितमन्यथा कथं पयोमुचा निर्मितमिन्द्रकार्मुकम् VikraDeC.13.21.

**अनेकवर्णात्मकत्व** (anekavarṇātmaka-tva) *n.* the state of having the nature of various letters ननु वर्णानामपि वाचकत्वे विभक्त्यन्तत्वे च पदत्वमेव। तत्किमर्थं पृथग् ग्रहणम्। एकानेकवर्णात्मकत्वविवक्षयेति ब्रूमः NyāySu. (Ja.) 182A. 4 (*on* i. 4. 2)

**अनेकवर्णादेश** (anekavarṇādeśa) *m.* substitution for various letters or syllables अक्षु चानेकवर्णादेशेषु Vār. 10 *on* P. i. 1. 50; MahāBh. i. 123. 25 (*on* i. 1. 50)

**अनेकवर्णानुभव** (anekavarṇānubhava) *m.* experience or knowledge of various letters or syllables (at one time) एवं च वर्णानां क्रमवतामाशुतरविनाशित्वेनैकदानेकवर्णानुभवासंभवात् TarkBhā. (Ke.) 49. 9.

**अनेकवर्णाभिव्यक्ति** (anekavarṇābhivyakti) *f.* expression of many letters or syllables अनेकवर्णाभिव्यक्तीनां यौगपद्याभावेन मन्त्रत्वस्याभिव्यक्त्यनापत्तेः MīmāKau. iii(2). 108. 5 (*on* ii. 1. 33)

**अनेकवर्णावृत्ति** (anekavarṇāvṛtti) *f.* repetition, i.e. alliteration of different letters or syllables स्यादावृत्तिरनुप्रासो वर्णानां पदवाक्ययोः। एकवर्णानेकवर्णावृत्तेर्वर्णगुणो द्विधा AgniP. 342. 1.

**अनेकवर्णास्पद** (anekavarṇāspada) *n.* abode of various letters or syllables प्रणवम् ... सरः ...। त्रयीरहस्यं विचितं तपोधनैरनेकवर्णास्पदमेकमक्षरम् YātrāPra. 9. 41.

**अनेकवर्णोच्चारण** (anekavarṇoccāraṇa) *n.* utterance of various letters or syllables न ह्येको वक्ता युगपदनेकवर्णोच्चारणक्षमः NyāyRa. 528. 11 (*on* 5(11). 71); अनेकवर्णोच्चारणस्य तद्धेतुत्वे दूरेऽपि तदप्रत्ययापत्तेः TattvCin. iv(1). 440. 5.

**अनेकवर्णोपवर्णन** (anekavarṇopavarṇana) *n.* description as having various colours चक्षुरादेरनेकवर्णोपवर्णनम् KāvyMī. 85. 19; Kāvyānu. (He.)18.1.

**अनेकवर्तिनी** (aneka-vartinī) *adj.* (*f.*) exisiting in more than one (substratum) द्वित्वादिका परार्धान्ता संख्या यानेकवर्तिनी ĀtmaSi. 60. 20.

**अनेकवर्त्मन्** (aneka-vartman) *adj.* consisting of various modes, i.e. recensions एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक् VākyaPa.I. 5.

**अनेकवर्षशतिक** (aneka-varṣaśatika) *adj.* many hundreds of years old अनेकवर्षसाहस्रो (v. l. °शतिको) वृद्धस्त्वमसि पार्थिव Rāmā. ii. 2. 15; अनेकवार्षिको यस्तु चिर(v.l. अनेकवर्षशतिकश्चिर)कालसमुत्थितः। सोऽयमद्य हतः शेते Rāmā. iii. 64. 21.

**अनेकवर्षसंभुक्त** (anekavarṣa-sambhukta) *adj.* experienced through many years क्वानेकवर्षसंभुक्तश्वपचावनिपभ्रमः YogVā. v. 50. 2.

**अनेकवर्षसहस्र** (aneka-varṣasahasra) *n.* many thousands of years तथा हि अनेकवर्षसहस्रातीतपृथुसंबन्धा मही तेनैव व्यपदिश्यते पृथिवीति ManuBh. ii. 253. 19 (*on* 9. 44)

**अनेकवर्षसाध्य** (anekavarṣa-sādhya) *adj.* to be accomplished through many years प्रारब्धकर्मणश्चासमाप्तावनेकवर्षसाध्यस्य च मासव्रतस्यारब्धस्यान्यस्मिन्वर्षे पुनरारम्भसंकल्पविरोधः CaturCin. iii(2). 64. 10.

**अनेकवर्षसाहस्र** (aneka-varṣasāhasra) *adj.* many thousands of years old अनेकवर्षसाहस्रो वृद्धस्त्वमसि पार्थिव Rāmā. ii. 2. 15.

**अनेकवर्षसाहस्रम्** (anekavarṣasāhasram) *adv.* for many thousands of years अनेकवर्षसाहस्रं तपन्तं कुशिकात्मजम्। साधु साध्विति राजर्षिमूचुर्ब्रह्मादयः सुराः Rāmā. i. 1095*(2)

**अनेकवलभीकूट** (anekavalabhī-kūṭa) *n.* ends of many turrets or upper rooms तटे निषधकूटस्य श्लक्ष्णचारुशिलातले ...। अनेकवलभीकूटप्रतोलीशतसंकटम्। ... रक्षसां राक्षसं पुरम् VāyuP. i. 41. 52.

**अनेकवल्गित** (aneka-valgita) *n.* various gallops or leaps, i.e. exercises in weapons धनुर्वेदः ...। अनेकवल्गिताकारभूषणः पिङ्गलेक्षणः। ... वृषारूढस्स उच्यते NītiPra. 2. 4 (comm. अनेकवल्गितानि शस्त्राभ्यासाः)

**अनेकवल्लीवलय** (anekavallī-valaya) *m.*, *n.* circle, i.e. grove of many vines अनेकवल्लीवलयलटभा वृतयः क ताः TriṣaŚaPuC. ii. 1. 120.

**अनेकवसु** (aneka-vasu) *n.* various kinds of wealth (स्त्री) ईर्ष्यान्विता सुखपरा शशिशुक्रलग्ने ...। शुक्रज्ञयोस्तु रुचिरा सुभगा कलाज्ञा त्रिष्वप्यनेकवसुसौख्यगुणा शुभेषु Bṛhajjā. 24. 13.

**अनेकवसु** (aneka-vasu) *adj.* possessing much wealth यत्र ... कतिपयवसुविराजितमनेकवसवः समुपहसन्ति स्वर्गवासिनं जनं जनाः NalaCam. 1.27(3)

**अनेकवसुप्राण** (anekavasu-prāṇa) *adj.* having much effulgence as the life - principle ये त्वनेकवसुप्राणदेवा ज्योतिःपुरोगमाः। वसवोऽष्टौ ViṣṇuP. i.15. 109; KūrmaP. 171. 14(1. 16); AgniP. App. 4. 57; NaraP. 5. 45.

**अनेकवस्तु** (aneka-vastu) *n.* **1A** many things or objects आत्मशब्दश्च लोकेऽस्मिन् प्रसिद्धोऽनेकवस्तुषु BṛĀraUBhVā. iv. 3. 281; तस्य च संस्थानस्य चानेकवस्तुषु प्रकारतयावस्थितिः VedāSaṁ. 107. 5; ननु सर्ववस्तूनां स्वभिन्नत्वेऽपि न तच्छून्यत्वापत्तिः अनेकवस्तूनामेव संभवात् LaCandr. 795. 31; **1B** more than one thing or object परमार्थतो वाक्यार्थगतत्वेनास्यालंकारस्य संभवेऽप्येकया क्रिययानेकवस्तुनो भिन्नस्य संबन्धादौचितीवशेन पदार्थगतत्वेनाभिधानम् Ekāva. 8. 16(7) (241. 9); पर्यायेण यदेकस्य वस्तुनोऽनेकवस्तुनि। गमनं वर्ण्यते सा हि पर्यायालंकृतिर्मता AlaṅkāMañ. 151. 14; **1C** different entities संस्थानरूपप्रकाराख्यस्य पदार्थस्यानेकवस्तुनिष्ठतयानेकवस्तुविशेषणत्वं द्वितीयादिप्रत्ययावगम्यमिति द्वितीयादिप्रत्ययाः सविकल्पका इत्युच्यन्ते VedāSaṁ. 88. 9; **2** more than one referent एतदेव सूत्रकाराणां परं कौशलं यदेकेनैव वाक्येन स्वल्पैरेवाक्षरैरनेकवस्तुसमर्पणम् NyāyMañ. i. 26. 4.

**अनेकवस्तुक्रय** (anekavastu-kraya) *m.* purchase of many things or objects अनेकवस्तुक्रयविक्रयैश्च ... संशोभितं जगति ... नगरं नरेन्द्र BrahmāṇḍP. ii. 27. 14.

**अनेकवस्तुजाती** (aneka-vastujātī) *f.* various things and jasmine flowers सुरथो वीक्ष्य श्रीरामम् ...। अनेकवरिवस्याभिः (v. l. अनेकवस्तुजातीभिः) ... समतोषयत् PadmP. iv. 53. 29.

**अनेकवस्तुविशेषण** (anekavastu-viśeṣaṇa) *n.* differentiating factor of various things or objects संस्थानरूपप्रकाराख्यस्य पदार्थस्यानेकवस्तुनिष्ठतयानेकवस्तुविशेषणत्वं द्वितीयादिप्रत्ययावगम्यम् VedāSaṁ. 88. 10.

**अनेकवस्तुविषय** (anekavastu-viṣaya) *m.* object of many things सा ... °अनेकवस्तुविषयमात्रभाविनी TattvSaṁPañ. 223. 15 (*on* 673)

**अनेकवस्तुविषय** (anekavastu-viṣaya) *adj.* which has many things as its objects समसनं समासः संक्षेप इत्यर्थः। संक्षेपश्चानेकवस्तुविषयः Nyās. i. 340. 4 (*on* ii. 1. 4)

**अनेकवस्तुसंकीर्ण** (anekavastu-saṅkīrṇa) *adj.* mixed up with, i.e. involving many topics यत्तु 'अनेकपदसंकीर्णः पूर्वपक्षो न सिध्यति' इति तत्र यद्यनेकवस्तुसंकीर्ण इत्युच्यते तदा न दोषः Mitā. 132. 2 (*on* 2. 6)

**अनेकवस्तुसद्भाव** (anekavastu-sadbhāva) *m.* existence of various things or objects अनेकवस्तुसद्भावे जायमानतयाथवा। विभक्तानेकतन्त्वादिविषया इव बुद्धयः TattvSaṁ. 673.

**अनेकवस्तुसंनिपात** (anekavastu-sannipāta) *m.* coming together or concurrence of many things यानेकवस्तुसंनिपाते सत्युपजायते सा ... इयं संयुक्तधीः TattvSaṁPañ. 223. 14 (*on* 673)

**अनेकवस्तुसंबन्ध** (anekavastu-sambandha) *m.* relation with many things सममौचित्यतोऽनेकवस्तुसंबन्धवर्णनम्। अनुरूपं कृतं सद्म हारेण कुचमण्डलम् Candrā. 5. 81.

**अनेकवस्तुसूचन** (anekavastu-sūcana) *n.* indication of more than one thing or referent श्रुत्यर्थद्वारकानेकवस्तुसूचनशालिषु। सूत्रेष्वनेकार्थविधेर्वाक्यभेदो न दूषणम् NyāyMañ. i. 25. 26.

**अनेकवस्त्वनुपगम** (anekavastv-anupagama) *m.* non-admittance of different entities, i.e. categories यथानेकवस्त्वनुपगमेऽपि परमतेऽणुचयो धीहेतुः NayaVi. 97. 8 (*on* i. 1. 5)

**अनेकवस्त्वालम्बन** (anekavastv-ālambana) *adj.* based on many things येनेदमुच्यते विज्ञानमपास्य तन्निदर्शयितव्यम् इति। अनेकवस्त्वालम्बनं हि यत्र ज्ञानं तत्रेदं युज्यते वक्तुम् Bṛha. 240. 9 (*on* i. 1. 5)

**अनेकवाक्य** (aneka-vākya) *n.* **Ai** many sentences or statements इयं च विद्वद्गेहेष्वेव दृश्यते इत्येतावतः प्रभूतस्यार्थस्यानेकवाक्येन प्रतिपादितत्वात् SaraKaṇṭhā. 86.16; उपधानमात्रस्य विधेयत्वे 'चित्रिणीरुपदधाति वज्रिणीरुपदधाति' त्यनेकवाक्यानां वैयर्थ्यापत्तिः LaCandr. 372. 29; **Aii** more than one sentence or statement, cf. अनेकवाक्यपतित; **Bi** various injunctive sentences भवतु वा अनेकवाक्यकल्पनम्

... तस्मात्तदेवेदं कर्म न तु कर्मान्तरमिति सिद्धम् Bhām. 595. 5 (*on* iii. 3.7); **Bii** various originative injunctions, cf. **अनेकवाक्योत्पादित.**

**अनेकवाक्यगतत्व** (anekavākyagata-tva) *n.* the state of being conveyed by more than one sentence असंभवद्वस्तुनिदर्शना त्वेकवाक्यानेकवाक्यगतत्वेन द्विविधा SāhiDa. 556. 8; अत्र तु विधायकानां लिङामनेकत्वाद्विकाराणां चानेकवाक्यगतत्वेन तावद् विकारविशिष्टैकप्रयोगविधायकत्वकल्पनानवकाशात् VidhiRa. 41 (205.16)

**अनेकवाक्यगा** (anekavākya-gā) *f.* variety of figure of speech called Nidarśanā (*lit.* what is conveyed by more than one sentence) वस्तुनिदर्शना त्वेकवाक्यानेकवाक्यगतत्वेन द्विविधा। ... अनेकवाक्यगा यथा SāhiDa. 557. 2.

**अनेकवाक्यज्ञान** (anekavākya-jñāna) *n.* knowledge of more than one sentence ब्राह्मणेऽग्निहोत्रादिवाक्यैः साध्यसाधनेतिकर्तव्यतावत्यां भावनायां नियुक्तेषु पुरुषेष्वेकानेकवाक्यज्ञानं क्वोपयुज्यते TantrVā. 424. 23 (*on* ii. 1. 46)

**अनेकवाक्यता** (an-ekavākyatā) *f.* absence of syntactic unity प्रधानोत्पत्तिवाक्यैर्गुणानुवादे परस्पराश्रयं, अनेकवाक्यता ... एते दोषाः प्रसज्येरन् CaturCin. iii(1). 114. 4; त्रिकपक्षेऽप्यनेकवाक्यतां स्वादिसूत्रे वक्ष्यति न्यासकारः PariVr̥.(Si.)44.3.

**अनेकवाक्यत्व** (an-ekavākyatva) *n.* absence of syntactic unity सिद्धे ह्यनेकवाक्यत्वे कल्प्या भिन्नाधिकारिता BṛĀraUBhVā. (Sambandha.) 285.

**अनेकवाक्यलक्षणा** (anekavākya-lakṣaṇā) *f.* indication of more than one sentence निवर्तन्त इत्येकस्य वाक्यस्य मुख्यत्वायानेकवाक्यलक्षणाश्रयणायोगात् ŚrutaPra. iB. 233. 18 (*on* i. 1. 17)

**अनेकवाक्यविहित** (anekavākya-vihita) *adj.* enjoined or prescribed by various injunctive sentences वागन्तेन दीक्षणीया ... इत्याद्यनेकवाक्यविहितस्वरभेदवत्त्वात् तत्तदिष्टीनां तत्तदिष्टिसंबद्धप्रयाजादिदेवानां भेदापत्तेः ViraMi. (Saṁskāra.) 893. 7.

**अनेकवाक्यव्यवहिता** (anekavākya-vyavahitā) *adj.* (*f.*) intervened by many sentences स चोदकशब्दो न दूरे सतीमिमामनेकवाक्यव्यवहितां प्रकृतिमपेक्षिष्यते ŚābaBh. 1866. 4 (*on* x. 3. 2)

**अनेकवाक्यसंयुक्त** (anekavākya-saṁyukta) *adj.* connected with many sentences अनेकयुक्ति यद्वाक्यमनेकार्थप्रसाधकम्। अनेकवाक्यसंयुक्तं तन्निर्भासनमुच्यते NāṭyaŚā. 16. 26.

**अनेकवाक्यसाध्यत्व** (anekavākyasādhya-tva) *n.* the state of being what is to be accomplished through many sentences प्रतिवचनस्यानेकवाक्यसाध्यत्वात् मध्ये न चोदनीयम् ŚrutaPra. iA. 91. 19 (*on* i. 1. 1)

**अनेकवाक्यस्थ** (anekavākya-stha) *adj.* existing, i.e. occurring in many sentences अहंशब्दैश्चिन्मात्रमुपलक्ष्यते चेत् अनेकवाक्यस्थाहंशब्दलक्षणैव दोषः Śruta-Pra. iA. 172. 21 (*on* i. 1. 1)

**अनेकवाक्यस्वारस्य** (anekavākya-svārasya) *n.* fitness for (employing) more than one sentence एकवाक्यस्वारस्यभङ्गेन अनेकवाक्यस्वारस्यं ह्यनुवर्तनीयम् ŚrutaPra. iB. 233. 19 (*on* i. 1. 17)

**अनेकवाक्यानुमान** (anekavākyānumāna) *n.* inference of many sentences एकार्थानेकपदोपस्थितौ वानेकवाक्यानुमानमेव TattvCin. iv(1). 488. 2.

**अनेकवाक्यानुरोध** (anekavākyānurodha) *m.* [Abl.] in accordance with many statements बहूनामनुग्रहो न्याय्य इति न्यायेनानेकवाक्यानुरोधात् ViraMi. (Saṁskāra.) 742. 8.

**अनेकवाक्यान्तरायत्त** (anekavākyāntarāyatta) *adj.* depending upon, i.e. caused by many other sentences भावनाभिधानक्रियायाः ... फलकरणांशपूरणं पदद्वयमात्रसाध्यमितिकर्तव्यतालाभस्त्वनेकवाक्यान्तरायत्तसिद्धिः TantrVā. 872. 13 (*on* iii. 3. 14)

**अनेकवाक्यान्तरित** (anekavākyāntarita) *adj.* (used as noun) (what is) intervened by many sentences अनेकवाक्यान्तरितस्य च प्रकृतिगामित्वं विक्षेपात् प्रकरणमिव भवति SaṅkarKāBh. 153. 9(*on* iii. 3. 3)

**अनेकवाक्यार्थ** (aneka-vākyārtha) *m.* **i** many sentence - meanings पदार्थसामर्थ्यादनियमेनानेकवाक्यार्थपरिप्लवे सति ... विशिष्टवाक्यार्थावगतिसिद्धिः NyāyRaMā. 83. 9; **ii** more than one sentence- meaning द्वितीये त्वध्याहृतस्य प्रभुकर्तृकारकस्य निद्रादिष्वन्वय इत्येकस्यानेकवाक्यार्थान्वयेन दीपकच्छायापत्त्या कारकदीपकम् Kuval. 117(7); एकस्यैव कर्तृकारकस्य भिक्षुकस्य विकल्पादिष्वन्वयेनानेकवाक्यार्थान्वयात् AlaṅkāMañ. 157. 27.

**अनेकवाक्यार्थरूप** (anekavākyārtha-rūpa) *adj.* of the form of many sentence - meanings 'मृग्यः ... दिशि ... उत्पक्ष्मराजीनि विलोचनानि' पूर्वत्र पादत्रयार्थोऽनेकवाक्यार्थरूपः। चतुर्थपादार्थो हेतुत्वेनोपात्तः AlaṅkaSa. 145. 3; RasGaṅ. 632. 12.

**अनेकवाक्यार्थहेतुक** (anekavākyārthahetu-ka) *adj.* having many sentence - meanings as the cause, caused by many sentence - meanings यत्त्वनेत्रसमानकान्ति सलिले ... इत्यनेकवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे ... इन्दीवरशशिहंसविशेषणानि तेषां वाक्यार्थानां हेतुभावोपपादकानि Kuval. 121(65)

**अनेकवाक्योत्पादित** (anekavākyotpādita) *adj.* (used as noun) (what is) produced, i.e. referred to by various originative injunctions कथं पुनरनेकवाक्योत्पादितस्यैकत्वं विज्ञायते TantrVā. 644. 11(*on* ii. 4. 13)

**अनेकवाचक** (aneka-vācaka) *adj.* **A** expressive of various (individuals) यः शब्दोऽनेकवाचकः स सर्वो जातिनिमित्तकः NyāySu. (Ja.) 374A. 11 (*on* ii. 2. 6); **B** expressive of various (meanings) नानाशब्दस्यानेकवाचकत्वाद्भावप्रधानत्वादनेकत्वमर्थः GuruCandr. ii. 272. 21.

**अनेकवाचकशक्ति** (aneka-vācakaśakti) *f.* various expressive powers सर्वव्यक्त्यभिधानं तावदयुक्तम्। अनेकवाचकशक्तिकल्पनाप्रसङ्गात् TantrVā. 273. 11(*on* i. 3. 26)

**अनेकवाचना** (aneka-vācanā) *f.* more than one reading or recitation तावदेकवाचनया वज्रापेतुर्महर्षयः। अप्यनेकवाचनाभिर्यावन्न गुरुसंनिधौ PariPar.12.190.

**अनेकवाचिन्** (aneka-vācin) *adj.* expressive of various (meanings) न ह्यक्षादिशब्दानां रूढ्यादिनैवानेकवाचिनां क्वचिन्मुख्यता क्वचिन्नेत्यस्ति TattvPrakā. 72B. 12 (*on* i. 4. 16)

**अनेकवातायन** (aneka-vātāyana) *adj.* having many windows or air-holes कूटागारम् ... समन्तात् सुवृत्तं मृत्कर्मसंपन्नमनेकवातायनम् CaraS. i. 14. 46; AṣṭāSaṁ. i. 134. 10 (1. 26); सा ... आलोहितक्षितिविवि(?व)रसहस्रसंपन्नतया पद्मरागविमानमिवानेकवातायनम् ... जीवितेश्वरं तदवस्थं ददर्श AvantiKa. 128.9.

**अनेकवातायन** (aneka-vātāyana) *n.* many windows or air-holes महाप्रासादैरनेकवातायनविवरविनिर्गतयुवतिभूषणकिरणसहस्रतया कनकशृङ्खलाजालकेनेवापरिवितेतेन ... विराजमानम् ... राजकुलं विवेश Kād. 87. 3.

**अनेकवातिकमण्डल** (aneka-vātikamaṇḍala) *n.* many circles of winds उर्वीपतिः ... नखप्रभाविसरमनेकवातिकमण्डलं भ्रमणलग्नं रक्षाया भूतिरज इव दिक्षु विक्षिपन्तम् ... एकं वेतालमद्राक्षीत् TilaMañ. 46. 20.

**अनेकवादिन्** (aneka-vādin) *n.* **1** several plaintiffs अनेकवादियुग्मानां युगपदुपस्थाने तु दर्शनक्रममाह SmṛtiCan. iii. 80. 3; **2** many disputants or defendants अनेकवादिनिर्जिष्णुर्वादिपुत्रकपद्धतिम्। वामपादे वहन् PrabhāC. 174. 6; **3** teacher or advocate of the diversity( of souls) एवं निरूपितमेकानेकवादिनां जीवस्वरूपम् SiddhāTa. 4. 24.

**अनेकवादिविप्रतिपत्ति** (anekavādi-vipratipatti) *f.* difference of opinion among many defendants एवं चानेकवादिविप्रतिपत्तौ ... चोदना प्रमाणत्वेन प्रतिज्ञायते YuktiSneha. 16. 26 (*on* i. 1. 2)

**अनेकवाद्य** (aneka-vādya) *adj.* full of various musical instruments अनेकवाद्यं विविधास्त्रपङ्क्तिकम् ... विनिर्मिमीयेद् वासगृहं मनोरमम् NāgaSa. 2. 4 (comm. नानावाद्यसहितम्)

**अनेकवाद्य** (aneka-vādya) *n.* **A** different musical instruments अनेकवाद्यध्वनितैरनारतैर्जगर्ज गाढं गुरुभिर्नभस्तलम् KumāSaṁ. 14.39; **B** different sounds (produced from different instruments) क्रीडामण्डपमेतस्मिन् प्रदेशे देव तिष्ठति ...। अनेकवाद्यसंयुक्तं रमणीयं ययौ हरः SaurP. 59. 38.

**अनेकवाद्यजाति** (aneka-vādyajāti) *f.* different varieties of musical instruments सदा विजयभेरीणां ध्वनेराकर्णने महः। अनेकवाद्यजातीनां ध्वानालोचनकौतुकम् ParamāKā. 179. 37.

**अनेकवाद्यनिर्घोष** (anekavādya-nirghoṣa) *m.* sound(s) of different musical instruments राजा ...। अनेकवाद्यनिर्घोषैर्विमानस्यान्तिकं ययौ GaṇeP.i.56.19.

**अनेकवाद्यविकृति** (anekavādya-vikṛti) *f.* modification (of sounds) produced from different musical instruments अनेकवाद्यविकृतौ ज्ञानं तद्वादने कला। ... सूता ŚukraNī. 4(3). 67.

**अनेकवानरानीक** (aneka-vānarānīka) *m., n.* many troops or batalions of monkeys अनेकवानरानीकनायकेन साक्षादुपकृतेन सख्या सुग्रीवेण महापक्षस्य ... अयमेव ... तस्याभियोगसमयः AnarghaRā. 6. 11(1)

**अनेकवापीमणिमन्दिर** (aneka-vāpīmaṇimandira) *n.* many wells and mansions of gems or jewels अनेकवापीमणिमन्दिरैश्च। अनोपमं तं भवतो निकेतं मुनीश्वराः प्रापुः Nārāy. iii. 11. 2.

**अनेकवायसकुल** (aneka-vāyasakula) *n.* various families of crows अस्ति कस्मिंश्चित् प्रदेशे महान् न्यग्रोधवृक्षः। ... तत्र (v. l. तत्रानेकवायसकुलपरिवृतो) मेघवर्णो नाम वायसराजः प्रतिवसति स्म PañcT. 3. 1(4) (273. 1)

**अनेकवाय्वादिसहकार** (anekavāyvādi-sahakāra) *m.* assistance or help of various winds etc. एकशब्देन कथमनेकशब्दारम्भः सामग्र्यभेदादिति चेत्। न। सर्वतोऽनेकवाय्वादिसहकारात् प्रागभावभेदाद् वा TattvCin. i. 631. 1.

**अनेकवारकृत** (anekavāra-kṛta) *adj.* made or effected many times एवमनेकवारकृतैककर्तृकैककर्मकविक्रयादावपि पुनर्विक्रयादिर्वशित्वाभावान्न सिध्यति SmṛtiCan. iii. 310. 3.

**अनेकवारपरिकल्पना** (anekavāra-parikalpanā) *f.* contemplation for many times सर्वथा स एवैष भगवाननेकवारपरिकल्पनानिर्मितो विप्रलम्भः पुनःपुनरनुबध्नाति माम् UttaRāC.3. 43(16)

**अनेकवारम्** (anekavāram) *adv.* many times, again and again, repeatedly अयि वत्स ...। अनेकवारमपरिश्लथं मां परिष्वजस्व Utta RāC. 6. 12(10); तत्कूजितान्यनुवदद्भिरनेकवारं शिष्यायितं गृहकपोतशतैः ŚṛṅgāTi. (Ru.) 1. 62; SāhiDa. 110. 9; प्रसाद्य प्रभो प्रार्थयेऽनेकवारम् Subrahma. 22; मांसं महादुःखमनेकवारं ददाति जग्धं मनसापि पुंसाम् SubhāRaSaṁ. 538; (विनायकः) त्वया तु पूजितोऽनेकवारम् GaṇeP. ii. 22. 7; स चक्रवर्ती भरतः। ... राज्याभयं कर्तुमनेकवारं पुलोमजा यस्य पुरे ययाचे PṛthvīVi. 6. 90; इन्द्रेणानेकवारं निषिद्धोऽहम् SiṁhāDvā.(App.) 242. 0(34); अनेकवारं श्वकाकशूद्रोच्छिष्टदूषितानामेकविंशतिवारं क्षारोदकमार्जनाच्छुद्धिः VīraMi.(Śuddhi.) 117.29; अम्बुजबीजमाला। ... अनेकवारं परिवर्तयन्तम् ... मुनिम् ... प्रणनाम राजा Rāgh. 2. 6.

**अनेकवारोदीरित** (anekavārodīrita) *adj.* uttered many times स्वमुखानेकवारोदीरितमधुरशात्कृतिग्राहिणीनाम् ... कलमगोपिकासु ... मुग्धयुवतयः ... पातुमस्थुः AvantiKa. 32. 10.

**अनेकवार्षिक** (aneka-vārṣika) *adj.* many years old, long-lived अनेकवार्षिको यस्तु चिरकालसमुत्थितः। सोऽयमद्य हतः शेते Rāmā. iii. 64.21.

**अनेकवावदूकवादिन्** (aneka-vāvadūkavādin) *m.* many noisy or talkative disputants कथमहमिदानीमनेकवावदूकवादिवृषभविघट्टनोपार्जिताम् ... वाचम् ... माधुर्यकोमलां करिष्यामि PadmPrā. 9. 5.

**अनेकवासना** (aneka-vāsanā) *f.* A various desires अनेकवासनामिश्रप्रपञ्चोऽयं धृतो मया NirguMāPū. 17; 2 many impressions अनेकवासनाचित्रं तल्लिङ्गं पटभित्तिवत् BṛĀraUBhVā. ii. 3. 86.

**अनेकवासस्** (aneka-vāsas) *adj.* wearing more than one piece of cloth गङ्गायाम् ...। एकवासोऽनेकवासोऽप्यकुशस्वर्णरूप्यकम् BṛDharmaP. i. 54. 43.

**अनेकवाहनिवह** (aneka-vāhanivaha) *m.* many troops of horses सन्ति क्षोणिभुजः क्षितौ कति न ते ये स्वप्रियप्रीतये। वाहं वाहमनेकवाहनिवहान् प्रौढिं दृढां तन्वते HammīMaKā. 14. 9.

**अनेकवाहिनीवियोग** (anekavāhinī-viyoga) *m.* separation from many rivers तुषारशैलद्रवनिर्झरोदकं समाहरन्नुत्तरभूमिनिम्नगाः। हिमोपचारार्थमनेकवाहिनीवियोगतप्तस्य सरित्पतेरिव VikraDeC. 13. 7.

**अनेकविंश** (an-ekaviṁśa) *m.* (what is) less than twenty-one न चैष सैकविंशे ऋतावनेकविंशस्तथेह भवतीति NidāSū. 180. 17 (10.6)

**अनेकविंशति** (an-ekaviṁśati) *f.* other (i.e. less) than twenty-one तस्यैकविंशतिर्यूपा भवन्ति ... नो ह्येताननेकविंशतिः यूपाः पशून्नुद्यन्तुमर्हन्ति JaimiBr. 2. 274.

**अनेकविकटावर्तशत** (aneka-vikaṭāvartaśata) *n.* many hundreds of frightful whirlpools कथमयमनेकविकटावर्तशतसंकुलः सर्वतः ... दुष्टजलचरैः पदे पदे प्रस्खलितयानपात्रगतिरतिमात्रदुर्गः सागरैकदेशो लङ्घयितव्यः TilaMañ. 149.19.

**अनेकविकटोदयशैलशृङ्ग** (aneka-vikaṭodayaśailaśṛṅga) *m.* many frightful peaks of the eastern mountains हौताशनैः ... मूर्तिः ...। आभादनेकविकटोदयशैलशृङ्गलग्नार्कबिम्बवलयेव युगक्षयद्यौः HarVi. 40. 23.

**अनेकविकरण** (aneka-vikaraṇa) *adj.* having, i. e. caused by various conjugational signs इत्यनेकविकरणसरूपधातुव्याख्यानं देवनाम्ना विरचितं दैवं समाप्तम् DaivaVyā. 200.

**अनेकविकल्प** (aneka-vikalpa) *adj.* [*f.* - ā] A consisting of many doubts इत्यनेकविकल्पाभून्मोहनिस्पन्दलोचना (सा) RāmāMañ. 259. 19 [manifold, pw.]; B consisting of various options इत्यनेकविकल्पोऽभूज्जल्पः RāmāMañ. 397. 8.

**अनेकविकल्प** (aneka-vikalpa) *m.* A many varieties गायन्त्यवादयदनेकविकल्पकल्पकोणावघट्टनकलक्वणितां च कूर्मीम् HarVi. 26. 87; B several doubts अनेकविकल्पकवलितमनोवृत्तिरात्मनः कर्तव्यमालोचयन्ती तिष्ठामि TilaMañ. 339. 20; C various options इह पुनरनेकविकल्पेन संभावितस्य बाधकेनोत्पुंसितस्य ... ग्गोचरत्वम् AlaṅkāRa. 31. 4.

**अनेकविकल्पविप्रलब्धा** (anekavikalpa-vipralabdhā) *adj.* (*f.*) deceived or misled by several doubts अनेकविकल्पविप्रलब्धे मनसा त्वया ... मे न कार्यः प्रथमप्रार्थनाभङ्गः TilaMañ. 44. 12.

**अनेकविकल्पसंभव** (anekavikalpa-sambhava) *m.* possibility of various options समयप्राधान्यादर्थनिवेशस्यैकस्यापि वाक्यस्यानेकविकल्पसंभवात् PramāVāSvopVṛ. 84. 19.

**अनेकविकल्पस्फुरण** (anekavikalpa-sphuraṇa) *n.* flashing or striking of various options अनेकविकल्पस्फुरणेन विकल्पयतोऽनिष्टकल्पत्यागेन प्रतिज्ञाहानिः TārkiRa. 357. 2.

**अनेकविकल्पौघ** (aneka-vikalpaugha) *m.* 1 several hosts of conjectures इत्यनेकविकल्पौघव्याकुलस्तामितस्ततः। ... अन्विष्यन्सोऽभ्रमन्निशि KathāSaSāg. xii. 20. 12; 2 several hosts of doubts अनेकविकल्पौघविह्वलोऽथ बभूव सः KathāSaSāg. xiv. 1. 9.

**अनेकविकार** (aneka-vikāra) *m.* various modifications or changes ज्ञानशब्दोऽनेकविकारयुक्तान्तःकरणवृत्तिप्रतिबिम्बितचैतन्ये व्युत्पन्नः VivaPraSaṁ. 289. 14.

**अनेकविकार** (aneka-vikāra) *adj.* consisting of various modifications or changes गुणानां तत्कार्याणां चानेकविकाराणामनेकचैतन्यगुणकल्पनायां गौरवेण लाघवादेकः ... पुरुषः ... कल्पयितुं युज्यते SāṁkhyaPraBh. 36. 5(*on* 1.66)

**अनेकविकिरकुल** (aneka-vikirakula) *n.* many flocks of birds यः (पादपः) खल्वनेकविकिरकुलकामिनीनिशितशिखोल्लेखनखमुखविलिख्यमानशाखाभुजशिखरः Yaśas- Cam. ii. 172. 8.

**अनेकविकृति** (aneka-vikṛti) *f.* many modifications or changes नीवोऽयम् ... धत्ते सङ्गवशादनेकविकृतीः KumāPraPra. 66. 3.

**अनेकविक्रमकथा** (anekavikrama-kathā) *f.* story of many heroic deeds पौराणीभिरनेकविक्रमकथागाथाभिरर्थापितास्ते वीरस्य जयन्ति राक्षसपतेर्दोःस्तम्भदम्भोलयः AnarghaRā. 3. 59.

**अनेकविगलल्लोक** (aneka-vigalalloka) *m.* many falling people अनेकविगलल्लोकशोणितासवपूरिताः। बभुस्तत्र शिरस्त्राणा यमस्य चषका इव RājTa.(Prā.) 799.

**अनेकविग्रहप्रतिपत्ति** (anekavigraha-pratipatti) *f.* acquisition or assumption of more than one body अनेकप्रतिपत्तेरनेकविग्रहप्रतिपत्तेरित्यर्थः BrahmSūBh.(Bhā.) 61. 10 (*on* i. 3. 27); एकस्यापि योगसिद्धस्यानेकविग्रहप्रतिपत्तेः अनेकशरीरप्राप्तेः VedāntKau. 99. 5(*on* i. 3. 27)

**अनेकविघ्न** (aneka-vighna) *m.* many obstacles or hindrances मध्ये अनेकविघ्नाः देहस्यापि नाशो भवति SiṁhāDvā. 153. 0(15)

**अनेकविघ्नतस्** (anekavighna-tas) *adv.* with many obstacles or hindrances भवति हि नाभिसूत्रममुना तत उत्तरमश्नुते रसान्। इति कथितक्रमादधिनीतवृद्धिमनेकविघ्नतः। ... प्रभवति KalyāKā. 2. 57.

**अनेकविचारान्तर्हित** (anekavicārāntarhita) *adj.* inclusive of many discussions तदेतदर्थवादप्रस्तावेऽभिहितमप्यनेकविचारान्तर्हितम् ŚāstrDī. 55. 1 (*on* i. 4. 1)

**अनेकविचित्रनेत्र** (aneka-vicitranetra) *n.* 1 several wonderful eyes शुनासीरवदनेकविचित्रनेत्रोज्ज्वलगात्रैः सुचरित्रैः ... शेषाद्रिरलंकृतामात्मजातां दातुम् ... तुभ्यम् ĀnandRa. 5. 8(5); 2 several wonderful (fine) clothes, ĀnandRa. 5.8(5) (comm. नेत्रं सूक्ष्मं वस्त्रम्)

**अनेकविचित्रवेदना** (aneka-vicitravedanā) *f.* various wonderful feelings (विज्ञानात्मा) पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वादु अनेकविचित्रवेदनास्वादरूपं स्वादु अत्ति MuṇḍUBh. 179. 17(*on* 4. 6)

**अनेकविचित्रशक्ति** (aneka-vicitraśakti) *f.* various wonderful powers 'इन्द्रो मायाभि'रित्यत्रानेकविचित्रशक्त्यभिधायित्वं बहुवचनादवगम्यते ŚrutaPra. iB. 40. 20(*on* i. 1. 1)

**अनेकविच्छित्तिविरचित** (anekavicchitti-viracita) *adj.* embellished or adorned with various kinds of unguents अनेकविच्छित्तिविरचितमण्डनाभिः ... अन्तःपुरिकाभिः ... भगवन्तं प्रद्युम्नमुपपाद्य TilaMañ. 300. 23; 322. 14.

**अनेकविजयिन्** (anekavijay-in) *adj.* having many victories अनेकविजयी चेति सन्धेयाः सप्त कीर्तिताः NītiSā. 9. 43; SūktiRa. 133. 1; अनेकविजयी चैव संधेयः स रिपुर्भवेत् Pañcā. 175. 13 [victorious in many battles, APTE]

**अनेकविजातीयगुण** (aneka-vijātīyaguṇa) *m.* many diverse qualities न चानेकविजातीयगुणवदारब्धत्वं रूपस्य व्याप्यवृत्तित्वविरोधात् SarvaDaKau. 25.16.

**अनेकविज्ञान** (aneka-vijñāna) *n.* 1A many cognitions कः पुनरयं व्यासङ्गः अभीष्टविषयोऽनेकविज्ञानोत्पादः NyāyVār. 407.8 (*on* iii. 2. 8); 1B more than one cognition नानेकविज्ञानविषयत्वादेकम् एकत्राप्यनेकविज्ञानप्रसूतेः HetuBiṬ. 103. 27; 2 cognition of more than one (thing) नैकत्राणेऽप्यनेकार्थग्रहणात्रियमस्ततः।

**अनेकस्तुति** (aneka-stuti) *f.* 1 many hymns of praises अनेकस्तुतिभिः स्तुत्वा गिरीशम् SkandP. i (1). 5. 140; 2 praise in various ways राज्ञानेकस्तुतीः कृत्वा सविनयं नत्वा कृत्यादेशेन प्रसीदत PurāPraSaṁ. 16. 21.

**अनेकस्तुतिजन्य** (anekastuti-janya) *adj.* produced from many hymns of praises विधेयभावनाभाव्यस्यानेकस्तुतिजन्यापूर्वस्य भेदावश्यंभावात्तद्वादशत्वेनापि स्तोत्रादिद्वादशत्वोपपत्तिः MīmāKau. iii (2). 98. 12 (*on* ii. 1. 25)

**अनेकस्तुतिव्यतिकर** (anekastuti-vyatikara) *adj.* mixed with many hymns of praises अनिमिषनिकायकीर्त्यमानानेकस्तुतिव्यतिकरमितस्ततो महामहोत्सवावतारं च निचाय्य सत्वरम् ... श्रेणिकधरणीश्वरायेदं निवेदयामासुः YaśasCam. ii. 305.21.

**अनेकस्तोमक** (anekastoma-ka) *adj.* i (sacrifice) having more than one typical form of chant (*stoma*) किमेकस्तोमकस्य क्रतोरेष वाद उतैकस्तोमकस्यानेकस्तोमकस्य चेति ŚābaBh. 1335. 1 (*on* v. 3. 43); ii (sacrifice) having many typical forms of chants (*stomas*) स्तोमान्तरसत्त्वेऽपि त्रिवृदादेरपि सत्त्वात् अनेकस्तोमकक्रतुदीपकत्वम् BhāṭṭDī. ii. 204. 4 (*on* v. 3. 15)

**अनेकस्त्रीपुरुषवहन** (anekastrīpuruṣa-vahana) *adj.* carrying, i. e. effecting many females and males अनेकस्त्रीपुरुषवहनानि तेषां बंदा(बन्धना)नि चैवं कदाचिद्भवति(न्ति) BhelaS. 84. 17 (4. 4)

**अनेकस्थ** (aneka-stha) *adj.* A pertaining to many (males), i.e. polyandrous न च धर्मोऽप्यनेकस्थश्चरितव्यः सनातनः MahāBhā. i. 188. 8; B carried out at different places, cf. **अनेकस्थत्व A; C** occurring in more than one item, cf. **अनेकस्थत्व B; D** (an-ekastha) not occurring in one place चोरप्रकृतीनां म्लेच्छजातीनां च स्थानविपर्यासमनेकस्थं कारयेद्दुर्गराष्ट्रदण्डमुख्यानां च ArthŚā. iii. 210. 9 (13. 5) (comm. असंहतम्)

**अनेकस्थत्व** (anekastha-tva) *n.* A the state of being carried out at different places यौगपद्यात्तु कर्मणामनेकत्वादनेकस्थत्वाच्च देशकालात्ययो मा भूदिति परोक्षममात्यैः कारयेत् ArthŚā. i. 46. 6 (1. 9); B the state of occurring in more than one item, i. e. two सादृश्येन सह सादृश्येऽनेकस्थत्वादौ सादृश्यरूपत्वाश्रिते सादृश्यरूपत्वस्याश्रयणाभ्युपगमे परस्पराश्रयभावः KhaṇḍanKhā. 740. 12 (comm. सादृश्यस्य च द्विगामितया अनेकस्थत्वात्)

**अनेकस्थान** (aneka-sthāna) *adj.* existing at many places किमीश्वरोऽवयवी पाणिपादाद्यवयवैरनेकस्थानः TattvPrakā. 153 A. 10 (*on* iii. 2. 2)

**अनेकस्थान** (aneka-sthāna) *n.* A various places (मरीचिः) एकोऽपि अनेकस्थानभेदत्वाद् बहुवचनभाक्मरीचय इति AitUBh. 252. 7 (*on* 1. 2); B more than one place एकैकदेशतोऽनेकस्थानगतत्वं परस्पराविरुद्धं श्रुतिविरुद्धं च TattvPrakā. 153B. 2 (*on* iii. 2. 11)

**अनेकस्थानतल** (aneka-sthānatala) *adj.* having many rooms and storeys अनेकस्थानतलम् ... पण्यगृहं कोष्ठागारं च ... कारयेत् ArthŚā. i. 133. 1 (2. 5) (comm. अनेकैः कोष्ठैर्भूमिकाभिश्च युक्तम्)

**अनेकस्थानवृत्ति** (anekasthāna-vṛtti) *f.* existence in more than one place किमेषां विकल्पः समुच्चयो वेति विशये निरपेक्षत्वप्रतीतेर्युगपदनेकस्थानवृत्त्यसंभवाच्च विकल्पः BrahmSūBh. (Rā.) 587. 5 (*on* iii. 2. 7); युगपदनेकस्थानवृत्त्ययोगाच्च विकल्पः स्यात् ŚrutaPra. ii. 431. 13 (*on* iii. 2. 7)

**अनेकस्थानस्थ** (anekasthāna-stha) *adj.* staying at various places वञ्चकान् ... चारैरनेकस्थानस्थैर्ज्ञात्वा प्रोत्साद्य स्ववशान् कुर्यात् ManvaMu. 412. 14 (*on* 9. 261)

**अनेकस्थायसंचार** (anekasthāya-sañcāra) *adj.* moving in various components of melody (*sthāyas*) अनेकस्थायसंचारः सर्वदोषविवर्जितः ... गायनाग्रणीः SaṃgīRa. ii. 154. 6 (3. 16)

**अनेकस्थित** (aneka-sthita) *adj.* [*f.* - *ā*] A staying in more than one place (नन्दनन्दिनी) एकानेकस्थिता लोके इन्दीवरनिभेक्षणा ... सा मे साक्षान्महादेवी पापमाशु व्यपोहतु LiṅgaP. i. 82. 21; B occurring in many places अनेकस्थितं वस्त्वेकत्र निषिध्यान्यत्र नियम्यते तत्र परिसंख्यालङ्कृतिः AlaṅkāMañ. 154. 13.

**अनेकस्थूपिकोपेत** (anekasthūpikopeta) *adj.* consisting of or possessing many spines अनेकस्थूपिकोपेतं कोष्ठकं मध्यमे भवेत् MayaMa. 22. 84.

**अनेकस्थूलावयव** (aneka-sthūlāvayava) *m.* number of gross constituents सर्वतो योजनादिव्यापिगन्धोपलम्भायानेकस्थूलावयवापसारेण सद्यो गुरुत्वादिह्रासस्य द्रव्यक्षयस्य चापातात् Nyāyāmṛ. 612 A. 8.

**अनेकस्मार्य** (aneka-smārya) *n.* many things which are to be remembered वानेकस्मार्ये। अनेकस्मार्ये प्रयोक्तरि सति स्मरणार्थैर्योगेऽतीते काले ती वा स्यात् MugdhaBo. 25. 30 (147. 1)

**अनेकस्मृति** (aneka-smṛti) *f.* 1A recollection of more than one (thing) एकस्मृतौ विपर्ययः, ततोऽविवेकात्, अनेकस्मृतौ तु संशयः नैकस्मादविवेकात् BrahmSi. 139. 16; 1B more than one recollection एकस्मृत्यारूढपदद्वयात् स्वस्य शक्त्या स्वस्वार्थयोरेकदा स्मृतिसंभवादनेकस्मृत्यर्थं न साहित्ये लक्षणा TattvCin. iv (2). 801. 4; 2 various Smṛti texts अध्येतॄणां अनेकस्मृतिमूलश्रुतिवाक्यत्यागकल्पनानुपपत्तेः MīmāKau. i. 3. 14 (*on* i. 3. 1)

**अनेकस्मृतिवाक्य** (anekasmṛti-vākya) *n.* sentences from various Smṛtitexts न हि तदनुरोधेनानेकस्मृतिवाक्यानामपलापः कर्तुमुचितः BālamBha. i. 65. 10 (*on* 1. 14)

**अनेकस्मृतिव्याकोप** (anekasmṛti-vyākopa) *m.* contradiction with various Smṛti-texts उत्तरार्धपाठः... मेधातिथिकल्पतर्वादिधृतो न युक्तः। अनेकस्मृतिव्याकोपापत्तेः BālamBha. ii. 146. 15 (*on* 2. 118-119)

**अनेकस्मृत्युपन्यास** (anekasmṛty-upanyāsa) *m.* mention or teaching of many Smṛti-texts केनचित् किंचित् स्मृतमिति दर्शनायानेकस्मृत्युपन्यासः Pradī. ii. 487 B. 19 (*on* ii. 3. 2) (*but* F.N. अनेकवार्तिकोपन्यास इत्यर्थः)

**अनेकस्रोतस्** (aneka-srotas) *adj.* having many currents or streams दीक्षितः ... अनेकस्रोतसं वा नदीं तरति ŚābaBh. 2212. 4 (*on* xi. 4. 50); ŚāstrDī. 841. 2 (*on* xi. 4. 17)

**अनेकस्वकृत्योपयोगित्व** (anekasvakṛtyopayogi-tva) *n.* the state of being useful to many acts of oneself द्रविणशब्देन सर्वस्वप्रायत्वमनेकस्वकृत्योपयोगित्वमुक्तम् Loc. 216. 16 (*on* 3. 41); Kāvyānu. (He.) 313. 21.

**अनेकस्वतन्त्रपद** (aneka-svatantrapada) *n.* many independent words नेदं शास्त्रीयं द्विर्वचनं किं तर्हि परप्रत्यायनायानेकस्वतन्त्रपदप्रयोग इत्युक्तं भवति Pradī. vii. 36. 15 (*on* viii. 1. 12)

**अनेकस्वत्वाक्रान्त** (anekasvatvākrānta) *adj.* covered with what belongs to many, i. e. common ownership यथा साधारणस्यानेकस्वत्वाक्रान्तस्य न यथेष्टविनियोगार्हत्वं तथा परद्रव्यस्यापीति तदपहरणमपि साहसं भवति BālamBha. ii. 310. 32 (*on* 2. 230)

**अनेकस्वभाव** (aneka-svabhāva) *adj.* [*f.* -*ā*] A possessing more than one nature or property तदेवं सर्वपक्षेषु नैवैकात्मा स युज्यते। एकानिष्पत्तितोऽनेकस्वभावोऽपि न संभवी TattvSaṁ. 1996; B possessing different or various natures विरोधादेकमनेकस्वभावमयुक्तम् NyāyKa. 30. 13; चैत्रदेहोऽनेकस्वभावेऽपि 'स एवायम्' इति एकरूपताम् अपरित्यजन्नेव निर्भासते PratyabhiVi. ii. 33. 8 (*on* ii. 2. 1); अभिसारिकाः शिवाश्चानेकस्वभावा असंहतरूपा एकस्मिन्नाश्रये राजपथे क्रमवर्तिन्यः AlaṅkāSa. 151. 15; जीवद्रव्यम् ... अनेकस्वभावं भवति TātpaVṛ. 370. 14 (*on* 3.75); परमाणव इमे खल्वनेकस्वभावः ... एकजात्यावरूढेः। आरभ्यन्ते NayaMañ. II. ii. 3. 5.

**अनेकस्वभाव** (aneka-svabhāva) *m.* nature of more than one thing न ह्येकमनेकस्वभावं(वो) नाम व्याघातात् NyāyKuA. i. 12. 5 (comm. न ह्येकमेकस्वभावात्मकमनेकेषां स्वभावो भवति)

**अनेकस्वभावक** (anekasvabhāva-ka) *adj.* having more than one nature न कपित्थादिवत्तत्त्वं स्वतोऽनेकस्वभावकम्। उक्त्वा सलिलवत्तस्मादेक इत्यब्रवीच्छ्रुतिः BṛĀraUBhVā. iv. 3. 1800.

**अनेकस्वभावकल्पन** (anekasvabhāva-kalpana) *n.* assumption of more than one nature परमाणवः रूपरसस्पर्शभावाः आप्याः .... इति भवद्भिरेकैकस्यानेकस्वभावकल्पनात् ŚatDū. 85. 12.

**अनेकस्वभावता** (anekasvabhāva-tā) *f.* the state of having more than one nature सहकारिसमवधाने जनकमजनकं चान्यदेति स्वभाव इति चेन्मैवम्। एकस्यानेकस्वभावतानुपपत्तेः TattvPradī. (Ci.) 210.6; एकस्यानेकस्वभावतामन्तरेणानेकस्वावयवव्यापनायोगात् SyādvāMañ. 28 (99); न चैकस्यानेकस्वभावताघातः ŚatDū. 85.10.

**अनेकस्वभावत्व** (anekasvabhāva-tva) *n.* the state of having more than one nature श्रुतत्वाददोष इति चेत् न एकस्य अनेकस्वभावत्वानुपपत्तेः BrahmSūBh. (Śaṅ.) 590.16 (*on* iii. 2. 21); विरोधः—एकस्यानेकस्वभावत्वविरोधः Bhāsk. ii. 9. 12 (*on* ii. 1. 1)

**अनेकस्वभावांश** (anekasvabhāvāṁśa) *m.* part or aspect of manifold nature न चानेकस्वभावांशवत्त्वं ज्ञानस्य संमतम् BṛĀraUBhVā. iv. 3. 698.

**अनेकस्वयंप्रकाशभाव** (aneka-svayamprakāśabhāva) *m.* several self-illuminated beings किमनेकस्वयंप्रकाशभावाभ्युपगमेन ĀtmaSi. 47. 17.

**अनेकस्वर** (aneka-svara) *adj.* consisting of more than one vowel निन्दहिंसक्लिशखादानेकस्वरविनाशिव्याभाषासूयां वुञ् Kātan. iv. 4. 28; SiddhaHe. v. 2. 68; व्रीहेरर्थात्स्वरूपतः। यथा व्रीहीति शालीति इत्यनेकस्वरादतः KātanVṛ. *on* ii. 6. 15 (3); *on* ii. 6. 40; योऽनेकस्वरस्य SiddhaHe. ii. 1. 56; iii. 4. 46; अव्यक्तानुकरणस्यानेकस्वरस्य ... क्रम्चस्तिना अनितौ द्विश्च SiddhaHe. vii. 2. 145; vii. 2.6.

**अनेकस्वर** (aneka-svara) *m.* **1** various notes अनेकस्वरसंयोगे योऽत्यर्थमुपलभ्यते। अन्यश्च बलिनो यस्य संवादी चानुवाद्यपि NāṭyaŚā. 28. 68; **2** more than one accent विधानं च भूयस्त्वादिना एकस्मिन्नेव वेद इति नानेकस्वरप्राप्तिः MīmāKau. ii. 317. 14 (*on* iii. 3. 6)

**अनेकस्वरूप** (aneka-svarūpa) *adj.* **A** of more than one form जयानेकस्वरूपैकविध प्रभो MatsyaP. 245. 75; VāmaP. 30. 26; वाच्यं वस्तु घटादिकम्। एकात्मकमेव एकरूपमेव सत् अनेकम् अनेकस्वरूपम् SyādvāMañ. 14 (181); अनेकस्वरूपे त्वयि मम रतिरुच्चैर्वर्धताम् StavMā. 305. 11; **B** of many aspects अनंशिन इत्येव श्रुतिरेतेषु वर्तते। अप्यनेकस्वरूपेषु विशेषादेव केवलम् AnuVyā. 21B. 4 (*on* ii. 1. 7)

**अनेकस्वरूपधृक्** (anekasvarūpa-dhṛk) *m.* one of the thousand epithets of Gaṇeśa (*lit.* bearing more than one form) एकानेकस्वरूपधृक् ... इति वैनायकं नाम्नां सहस्रम् GaṇeP. i. 46. 136.

**अनेकस्वरूपप्रतिपत्ति** (anekasvarūpa-pratipatti) *f.* assumption of more than one form एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः संभवति BrahmSūBh. (Śaṅ.) 188. 2 (*on* i. 3. 27)

**अनेकस्वरूपिन्** (anekasvarūp-in) *adj.* having more than one form न जानीषे मयूरेशम् ... एकानेकस्वरूपिणम् GaṇeP. ii. 116. 8.

**अनेकस्वर्णपात्रस्थ** (anekasvarṇapātra-stha) *adj.* being, i.e. present in many gold vessels अनेकस्वर्णपात्रस्थैः पक्वान्नैः ... पूजितम् ... न दृश्यते देवमुखम् GaṇeP. ii. 48. 28.

**अनेकस्वर्णापहरण** (anekasvarṇāpaharaṇa) *n.* stealing of large quantity of gold युगपदनेकस्वर्णापहरणेऽप्येकमेव प्रायश्चित्तं हरणक्रियाया एकत्वात् BālamBha. ii. 153. 9 (*on* 3. 258)

**अनेकस्वलक्षण** (aneka-svalakṣṇa) *adj.* possessed of different unique characteristics or particulars तमोमोहादिभेदेन तमोऽनेकस्वलक्षणम् BṛĀraUBhVā. iv. 4. 599.

**अनेकस्वातन्त्र्य** (aneka-svātantrya) *n.* independence of many अनेकस्वातन्त्र्ये कार्योदयायोगात् NyāySu. (Ja.) 286A. 4 (*on* ii. 1. 4)

**अनेकस्वादता** (anekasvāda-tā) *f.* the state of having different tastes एतास्तृणाः ...। अन्योन्यरससंयोगादनेकस्वादतां गताः PadmP. ii. 66. 14.

**अनेकस्वादुयुत** (anekasvādu-yuta) *adj.* associated with various sweet flavours खाद्यपेयलेह्यचोष्यरसा अनेकस्वादुयुताः SāmaraU. 225.19.

**अनेकस्वामिक** (anekasvāmi-ka) *adj.* **A** which has many owners or claimants, belonging to many persons सामान्यं स्वमनेकस्वामिकं रथ्याद्यत्र विवक्षितम् SmṛtiCan. iv. 442. 3; (सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम्) 'सामान्यं' अनेकस्वामिकम् CaturCin. i. 51. 1; VīraMi. 652. 6 (*on* 2. 175-76); सामान्यद्रव्यं हीनद्रव्यं धान्यादि अनेकस्वामिकं वा DīpKa. 67. 8 (*on* 2. 230); **B** which has more than one owner, cf. **अनेकस्वामिकत्व B.**

**अनेकस्वामिकत्व** (anekasvāmika-tva) *n.* **A** the state of having many owners यद्यपि अनेकस्वामिकत्वेन रथ्यादिकमपि कुटुम्बधनतुल्यं तथापि स्वतन्त्रानेकस्वामिकत्वाददेयम् SmṛtiCan. iv. 442. 5; **B** the state of having more than one owner द्रव्यस्यानेकस्वामिकत्वेनैकस्य व्ययेऽनधिकारात् NirṇaSi. 357. 1.

**अनेकस्वाम्य** (aneka-svāmya) *adj.* having ownership of many विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनम् Mitā. 216. 8 (*on* 2.114)

**अनेकस्वावयवव्यापन** (anekasvāvayava-vyāpana) *n.* pervading, i.e. penetrating more than one of its own parts एकस्यानेकस्वभावतामन्तरेणानेकस्वावयवव्यापनायोगात् SyādvāMañ. 28 (99)

**अनेकहंसकुलपरिवृत** (anekahaṁsakula-parivṛta) *adj.* surrounded by many hosts of swans शल्मलिवृक्षः। तस्मिन्दुरारोहतया निर्भीरनेकहंसकुलपरिवृतः क्षीरोदो नाम हंसराजः प्रतिवसति स्म Tantrākhyā. 121. 21.

**अनेकहयमेध** (aneka-hayamedha) *m.* many horse-sacrifices श्राद्धं च तर्पणं चात्र ...। अनेकहयमेधानां प्रदत्ते फलमव्ययम् BṛDharmaP. i. 21. 30.

**अनेकहर्म्य** (aneka-harmya) *n.* many mansions or buildings अनेकहर्म्यस्य विशालदेशके सभूषणोन्मानं यथा प्रविश्यते। कुर्वन्ति दोषं किल भर्तृकर्तृणाम् उक्त(क्तं) मानं कुरुते तु संपत् MānaSā. 30. 83.

**अनेकहल्** (an-ekahal) *adj.* not consisting of a single consonant नुक् चानेकहलः। एकहलोऽन्यस्य लिटि परतो द्विरुक्तौ पूर्वस्यादेर्दीर्घो भवति CāndraVyā. vi. 2. 124; नक्चाशून्वृदाद्यनेकहलः ŚākaṭāVyā. iv. 1.106.

**अनेकहल्** (aneka-hal) Gr. more than one consonant कथं पुनः श्रुतिभेदाभावो यावतानेकहलुच्चारणेनाधिकः कालो व्याप्यते एकहलुच्चारणे त्वल्पः Pradī. vi. 63. 16 (*on* vii. 2. 72)

**अनेकहलुपलक्षणत्व** (anekahalupalakṣaṇa-tva) *n.* the state of being what indicates, i.e. implies more than one consonant द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् SiddhāKau. 410 A. 1 (*on* i. 2. 2)

**अनेकहल्मध्य** (an-ekahalmadhya) *adj.* not occurring between two single consonants, i.e. occurring between two consonants of which one is a conjunct consonant तृफलभजत्रपश्चेति चकारस्यानुक्तसमुच्चयार्थत्वादनेकहल्मध्यस्यापि एत्वाभ्यासलोपौ Nyās. i. 146. 22 (*on* i. 2. 6)

**अनेकहविष्क** (anekahaviṣ - ka) *adj.* [*f.* -ā] **A** having various oblations यथैवानेकहविष्कासु विकृतिषु श्रुतानामुपहोमानाम् ... नानन्तर्यस्य नियामकत्वं, तथैव प्रकृतेऽपि MīmāKau. iii (2). 134. 15 (*on* ii. 1. 49); अनेकहविष्कविकृतिसंनिधिपठितोपहोमानां सर्वार्थत्वमेव BhāṭṭDī. i. 106. 12 (*on* ii. 1. 17); **B** having many oblations कृत्स्नहविर्नाशे तु अनेकहविष्कायामिष्टौ कतिपयहविर्नाशे हविरन्तरोत्पत्तिरेव BhāṭṭDī. ii. 270. 4 (*on* vi. 4. 1); VīraMi. (Saṁskāra.) 901.21.

**अनेकहस्तपाद** (aneka-hastapāda) *adj.* having many hands and feet भूतापि जज्ञे भूतान् ... अनेकहस्तपादांश्च बह्वक्षिमुखनासिकान् Rāmā. iii. App. I. 4 (11)

**अनेकहस्तसंपात** (anekahasta-sampāta) *m.* dropping of hands of many (people) भिक्षमाणस्य ... क्षवथुनिष्ठीवनमनेकहस्तसंपातो भिक्षाया इत्याद्युपघातः संभाव्यते ManuBh. i. 483. 11 (*on* 5. 127)

**अनेकहायनी** (an-ekahāyanī) *adj.* (*f.*) not one year old किं त्वतरुणयाप्यनेकहायन्या क्रयः प्राप्नोति, अरुणया चानेकहायन्या ŚābaBh. 697. 1 (*on* iii.i.12)

**अनेकहावभाव** (aneka-hāvabhāva) *m.* several gestures and feelings नन्दिनी ... कन्याम् ... दर्शयामास। ... राधिकां देवीम् ... अनेकहावभावादि द्योतयन्तीं वनेश्वरीम् ĀdiP. 13. 87.

**अनेकहास्यसरस** (anekahāsya-sarasa) *adj.* charming due to many jests or humours स्विद्यद्भालमनेकहास्यसरसम् ... धन्यो रतं सेवते ŚārṅgaPa.3701.

**अनेकहिरण्मयकन्दर** (aneka-hiraṇmayakandara) *adj.* having many valleys of gold अयमनेकहिरण्मयकन्दरस्तव पितुर्दयितो जगतीधरः Kirātā. 5. 45.

**अनेकहेतिक्षत** (anekaheti-kṣata) *adj.* injured or destroyed by various weapons नमामि ते नाथ करारविन्दम् अनेकहेतिक्षतदैत्यसंघम् GaṇeP. ii. 53.30.

**अनेकहेतु** (aneka-hetu) *m.* **Ai** many causes जातिस्मरत्वे स्युरनेकहेतवः KalyāKā. 3.15; **Aii** various causes अनेकहेतुकत्वेऽपि किमसमुदितानेकहेतुकः अथ समुदितानेकहेतुक इति वक्तव्यम् NyāySu. (Ja.) 390A. 10 (*on* ii. 2.7); **Bi** many probanses सफलावनेकहेतूपन्यासनिरासौ मन्दविषदष्टचिकित्सेवेत्युक्तम् NayaVi. 230. 11 (*on* i. 1. 8); **Bii** more than one probans अनेकहेतुप्रयोग एकत्र साध्ये निन्दितो वादेऽपि विशेषतोऽमन्दत्वे हेत्वन्तराणाम् NayaVi. 230. 8 (*on* i. 1.8)

**अनेकहेतुजत्व** (anekahetuja-tva) *n.* the state of being produced by various causes अभिनयानामनेकहेतुजत्वम्। तद्यथा—हर्षादिभ्यो हासः AbhinBhā. i. 347. 14 (*on* 7.4)

**अनेकहेतुत्वापत्ति** (anekahetutvāpatti) *f.* (undesired) contingency of having various causes तत्तद्विषयकत्वप्रमात्वादीनां मिथो विशेषणविशेष्यभावे विनिगमकाभावादनेकहेतुत्वापत्तेरित्यादि प्रतिपादितम् LaCandr. 678. 30.

**अनेकहेतुदृष्टान्तदूषण** (aneka-hetudṛṣṭāntadūṣaṇa) *n.* various defects of probans and examples संप्रतिपत्त्यानेकहेतुदृष्टान्तदूषणाद्यभिधानेऽपि न दोषः NyāyPari. 173. 5.

**अनेकहेतूक्ति** (anekahetūkti) *f.* statement or employment of many probans शास्त्रे चानेकहेतूक्तिर्न दोषाय कथास्विव NyāyMañ. ii. 9. 13.

**अनेकहेत्वभिभूत** (anekahetvabhibhūta) *adj.* set aside by many probans अग्व्यप्रायन्यायस्यानेकहेत्वभिभूतस्याकिंचित्करतया प्राणादीनामिन्द्रियत्वमशक्यनिश्चयम् ŚrutaPra. ii. 125. 15 (*on* i. 4. 13)

**अनेकहोतृप्रवर** (anekahotṛ-pravara) *m.* choosing or selection of many Hotṛ-priests by the Adhvaryu सर्वतोमुखेऽनेकहोतृप्रवरेऽध्वर्युप्रवरे च गृह्यमाणे देवाः पितर इत्यादिना यजमानकर्तृकानुमन्त्रणमेकमेव सर्वत्र संबध्यते AnuBh. 262. 24 (*on* iii. 3. 56), cf. **अध्वर्युप्रवर B.**

**अनेकहोम** (aneka-homa) *m.* various oblations or sacrifices एवं च अनेकमन्त्रके ... अनेकहोमे प्रतिहोमं प्रणवः VīraMi. (Paribhāṣā.) 80.1.

**अनेकहोमकालातिपत्ति** (anekahomakālātipatti) *f.* violation of the prescribed time for various sacrifices अवभृथोत्कर्षेणानेकहोमकालातिपत्तौ सर्वान् सायंहोमान् प्रातर्होमांश्च पक्षहोमविधिना समस्यहोमविधिना च स्वकालक्रियमाणहोमेन सह तन्त्रेण कुर्यात् BhāṭṭDī. ii. 300. 5 (*on* vi. 5. 17)

**अनेकांश** (anekāṁśa) *adj.* **1** having more than one as numerator

एकांशानामनेकांशानां चैकांशे फले छेदोत्पत्तौ सूत्रम् GaṇiSāSaṁ. 2. 78 (1); 2 having many aspects or parts अयमर्थोऽप्यनेकांशः KhaṇḍanKhā. 261.14; यदि परमाणुरनेकांशो न स्यात्। तदा युगपदनेकैर्न संयुज्येत NyāySu. (Ja.) 348B. 5 (on ii. 2. 6)

**अनेकांश** (an-ekāṁśa) *m.* A many factors, i.e. options यतश्च प्रज्ञप्तितोऽस्तीति वक्तव्योऽद्रव्यतो नास्तीति वक्तव्यः। एवमनेकांशवादपरिग्रहे नैवास्तित्वे दोषावकाशो न नास्तित्वे MaYānaSū. 155. 21 (18.103); B many aspects or parts अनेकांशोपेते लौकिके पदार्थे ... एकमंशमवधारयति BrahmSūBh. (Śaṅ.) 768. 18 (on iv. 1. 2)

**अनेकांशत्व** (anekāṁśa-tva) *n.* the state of having many aspects or parts (वृक्षाः) छेदिताश्चैव सर्वे वै ह्यनेकांशत्वमागताः SkandP. i (1). 16. 31.

**अनेकांशबालग्रहनिवारण** (anekāṁśa-bālagrahanivāraṇa) *adj.* curing of the demonic influence of the child - diseases of various aspects सिद्धः सर्पिस्तथा क्षीरं पानाद् बालग्रहान् जयेत् (v.l. पीतस्त्वनेकांशबालग्रहनिवारणः) RasRaSa. 22. 163.

**अनेकांशवृत्ति** (anekāṁśa-vṛtti) *f.* occurrence in more than one part भिन्नत्वे पुनरप्यनेकांशवृत्तेरेकस्य ... अनवस्था SyādvāMañ. 16 (216)

**अनेकाकल्प** (anekākalpa) *adj.* having many ornaments or decorations अरुणमनेकाकल्पम् ... नमत ... कृशानुम् ParaśuKS. 9. 16 (249. 25); ŚilpaRa. ii. 25. 16; NityoNi. 68. 23.

**अनेकाकार** (anekākāra) *m.* 1A various shapes सोऽगच्छत् पारियात्रस्य गिरेः कन्दरम् ...। अनेकाकारबहुलम् MatsyaP. 148. 9; SkandP. i (2). 15.40; 1B various forms चित्रबुद्धावनेकाकारस्यैकस्मिन्नसंभवाद्य Bhāṭṭ Cin. i. 20. 16 (on i. 1. 4); 2 various properties (देवदत्तः श्यामो युवा ... अदीनः) व्यतिरेकमुखेनानेकाकारान्वयोदाहरणम् अदीन इत्यादि ŚrutaPra. iB. 208. 22 (on i. 1. 13); 3 various aspects, ŚrutaPra. iB. 208. 22 (on i. 1. 13)

**अनेकाकार** (anekākāra) *adj.* [*f.* - ā] Ai of various natures तत्र ह्यनेकक्रिया अनेकाकारा NyāyVār. 257. 15 (on ii. 1. 40); अनेकाकारस्य हि प्रमेयस्य कश्चिदेवाकारः ... प्रमीयते Tantr Vā. 131.2 (on i. 3. 7); न चानेकाकाराः शक्तयः शक्याः कल्पयितुम् BrahmSūBh. (Śaṅ.) 200. 16 (on i. 3. 30); 336.18 (on ii. 1.28); इयमनेकाकारा वक्रत्वविच्छित्तिः VakroJī. 131. 13; विज्ञानानि न त्वनेकाकाराणि Bhām. 579. 13 (on iii. 3. 1); तेन यद्यादृशमेकाकारमनेकाकारं नो(?वो)पलभ्यते तत्तथैवाङ्गीकर्तव्यम् NyāyRa. 331.14 (on 5. (3). 218-219); अनेकाकाराणामेकवस्तुतावन्मात्रत्वम् VedāntKa. 551.4 (on iv. 4. 6); निराकारमपि ज्ञानं वासनावैचित्र्यादेकाकारमनेकाकारमिव भाति ŚaṭDū. 101.9; तस्माद् बुद्धिरेवानादिवासनावशादनेकाकारावभासते SarvaDaSaṁ. 2.217; YuktiSneha. 106.33 (on i. 1. 5); Aii of various forms or shapes सर्प ऋजुरनेकाकारः कुण्डलश्च भवति AṇuBh. 198. 15 (on iii. 2. 27); Aiii of more than one form, cf. अनेकाकारत्व B; B of many aspects न ह्येकं वस्त्वनेकाकारं भवितुमर्हति NyāyVār. 528. 14 (on iv. 2. 34); वस्त्वेकात्मकमेवेदमनेकाकारमिष्यते TattvSaṁ. 1720; Śarka. 18. 11; ŚāstrDī. 41. 28 (on i. 1. 4); C referring to many objects, cf. अनेकाकारता A.

**अनेकाकारकमनीयकारण** (anekākāra-kamanīyakāraṇa) *n.* charming causes of diverse nature सौभाग्यमपि पदवाक्यप्रकरणप्रबन्धानां प्रत्येकमनेकाकारकमनीयकारणकलापकलितरामणीयकानाम् ....काव्यस्य गुणान्तरं परिस्फुरति VakroJī. 77.20.

**अनेकाकारकरण** (anekākāra-karaṇa) *adj.* which has various types of rhythm स्वनन्ति परिवादिन्यस्ताडिता नारदादिभिः। अनेकाकारकरणः श्रूयते पुष्करध्वनिः BṛKathāŚloSaṁ. 5.36.

**अनेकाकारकल्पना** (anekākāra-kalpanā) *f.* assumption of various forms प्रतीतिभेददर्शनादनेकाकारकल्पनैवाश्रयितुमुचिता Kāśi. ii. 180. 19 (on 5 (3). 218)

**अनेकाकारकान्ति** (anekākāra-kānti) *f.* various types of (poetic) charms अनेकाकारकान्तिरमणीयां वक्रतां जनयन्ति VakroJī. 132. 3.

**अनेकाकारखचित** (anekākāra-khacita) *adj.* full of, i.e. assuming various forms (अधोक्षजम्। ...ध्यायेत्) अनेकाकारखचितम् ...अनेकायुधमण्डितम् TriBrU. 153.

**अनेकाकारग्रह** (anekākāra-graha) *m.* grasping or ascertaining of various forms अत्र चानेकाकारग्रहो नानाकारग्रहो विवक्षितः NyāyPari. 62.5.

**अनेकाकारग्रहण** (anekākāra-grahaṇa) *n.* grasping or ascertaining of various forms एकस्यानेकाकारग्रहणानुपपत्तौ भवतां चित्रप्रत्ययाभावप्रसङ्गात् NyāyKa. 42. 26.

**अनेकाकारता** (anekākāra-tā) *f.* A the state of referring to many objects केयमनेकाकारता Bṛha. 242. 7 (on i. 1. 5); B the state of having various forms अनेकाकारता यापि शूरभीरुधियं प्रति वासनानुग्रहात् सोक्ता ŚlokaVār. 7. 329 (938. 10); परिव्राट्कामुकशुनामेकस्मिन् प्रमदारूपेऽर्थे युगपदनेकाकारतावसीयते ...एकत्वादर्थस्य युगपदनेकाकारता नोपपद्यते TātpaṬ. (U.) 255.17 (on 5 (3). 60); Bhām. 755. 14 (on iv. 4. 6); एकत्वमपि तस्य वस्तुनो न केनचिद् व्यवस्थापितं यतोऽनेकाकारता न स्यात् NyāyRa. 331. 16 (on 5 (3). 220); VedāntKa. 551. 3 (on iv. 4. 6)

**अनेकाकारत्व** (anekākāra-tva) *n.* A the state of having various forms अनेकाकारत्वप्रतिषेधात् प्रतिषिद्धं हि ब्रह्मणोऽनेकाकारत्वम् BrahmSūBh. (Śaṅ.) 852. 4 (on iv. 4. 6); सति चानेकाकारत्वे युक्ता तत्तदाकारप्रतीतिव्यवस्था NyāyRa. 331. 18 (on 5 (3). 219); न चैवमनेकाकारविज्ञानजनकत्वात् पदानां लक्ष्यस्य ब्रह्मणोऽनेकाकारत्वप्रसङ्गः TattvPradī. (Ci.) 111. 12; NyāySiA. 253. 29; इन्द्रो मायाभिरित्यादिश्रुत्या अविद्याया अनेकाकारत्वेन Nyāyāmṛ. 639 A.9; AdvaiSi. 890. 26. B the state of having more than one form न तावदेकत्रार्थ एकात्मन्यनेकाकारत्व एवं न्याय्यः Kāśi. ii. 117. 21 (on 5 (3). 61); एकस्यानेकाकारत्वं विरुद्धम् NyāyRa. 331. 7 (on 5 (3). 218)

**अनेकाकारदर्शन** (anekākāra-darśana) *n.* perception or observation of more than one form अनेकाकारदर्शनादेकस्यानाकारकल्पना Kāśi. ii 180. 25 (on 5 (3).219)

**अनेकाकारबुद्धि** (anekākāra-buddhi) *f.* cognition of various forms न केवलं भिन्नानां प्रमातृणाम् एकत्रानेकाकारबुद्धिः Kāśi. ii. 117. 9 (on 5 (3). 59)

**अनेकाकारबोध** (anekākāra-bodha) *m.* cognition of various natures एकस्यापि तूपाधिभेदादनेकाकारबोधो दृश्यते Kāśi. ii. 117. 9 (on 5 (3). 59)

**अनेकाकारयोग** (anekākāra-yoga) *m.* connection with different forms न च ब्रह्मणोऽनेकाकारयोगोऽस्ति BrahmSūBh. (Śaṅ.) 759. 12 (on iii. 4. 52)

**अनेकाकाररमणीयकारण** (anekākāra-ramaṇīyakāraṇa) *n.* charming causes of diverse nature सौभाग्यमपि पदवाक्यप्रकरणप्रबन्धानां प्रत्येकमनेकाकारकमनीय (v. l. रमणीय) कारणकलापकलितरामणीयकानाम् VakroJī. 77. 20.

**अनेकाकारलक्षण** (anekākāra - lakṣaṇa) *adj.* characterized by various forms योगचिन्तकः। पश्यते योगिनीवृन्दमनेकाकारलक्षणम् MālinīT. 22. 24.

**अनेकाकारवक्त्र** (anekākāra-vaktra) *n.* various types of gates (*lit.* mouths) असावपश्यत् ...महाशालम् ...अनेकाकारवक्त्राढ्यम् PadmP. (Ra.) 52. 9.

**अनेकाकारवत्** (anekākāra-va(n)t) *adj.* possessing various forms मूलाज्ञानस्यानेकाकारवतः स्वरूपे(ण) अभावात् TarkSaṁ. (Ā.) 139. 26.

**अनेकाकारवस्तु** (anekākāra-vastu) *n.* A thing having many forms अनेकाकारवस्तुनि व्यवस्थिताकारोपलब्धिर्दृष्टा वासनावशेन TātpaṬ. (U.) 290. 20 (on 5 (3). 216); B thing having various forms न तथा शरीरशब्दः अपित्वनेकाकारवस्तुषु मुख्यः प्रयुक्तः ŚrutaPra. ii. 222. 13 (on ii. 1. 9)

**अनेकाकारविज्ञान** (anekākāra-vijñāna) *n.* knowledge of various forms न चैवमनेकाकारविज्ञानजनकत्वात्पदानां लक्ष्यस्य ब्रह्मणोऽनेकाकारत्वप्रसङ्गः TattvPradī.(Ci.) 111. 11.

**अनेकाकारविन्यास** (anekākāra-vinyāsa) *adj.* having various kinds of (display of) symbols (on a flag) अनेकाकारविन्यासाश्चान्येषां तु ध्वजास्तथा MatsyaP.148.48.

**अनेकाकारविन्यास** (anekākāra - vinyāsa) *m.* A various kinds of (display of) symbols अनेकाकारविन्यासादन्येषां च ध्वजाः SkandP. i (2). 16. 21; B layout of various shapes ब्रह्मा ... अनेकाकारविन्यासैस्ततो धात्रीं विनिर्ममे SaurP. 56. 18.

**अनेकाकारविवर्त** (anekākāra-vivarta) *m.* various forms of transformation हर्षविषादाद्यनेकाकारविवर्तं पश्यामः NyāyMañ. i. 70. 26.

**अनेकाकारसंवित्ति** (anekākāra-saṁvitti) *f.* cognition of various forms नानेकाकारसंवित्तेर्निराकारत्वकल्पना। युक्ता ŚlokaVār. 5 (3). 218 (331. 1)

**अनेकाकारसंविद्** (anekākāra-saṁvid) *f.* cognition of various forms पूर्वं च प्रमात्रपेक्षयानेकाकारसंविदुक्ता। अत्र तु ...एकत्रानेकाकारबुद्धिः Kāśi. ii. 117. 8 (on 5 (3). 59)

**अनेकाकारसंस्थाना** (anekākāra-saṁsthānā) *f.* one of the thousand and eight names of goddess Pārvatī (*lit.* having the aggregate of various forms) (शिवोमा परमा शक्तिः) अनेकाकारसंस्थाना कालत्रयविवर्जिता KūrmaP. 111. 8 (1. 12)

**अनेकाकारसंस्थिता** (anekākāra-saṁsthitā) *adj.* (*f.*) being in various forms चिन्तामनेकाकारसंस्थिताम्। संत्यज्य ...स्वाध्यायध्यानमभ्यसेत् ŚivU.7.127.

**अनेकाकारसमावेश** (anekākāra-samāveśa) *m.* co - existence of more

than one form धर्मिण एकत्वान्नानेकाकारसमावेशः संभवति NyāyRa. 286. 12 (*on* 5 (3). 59)

**अनेकाकारसृष्टि** (anekākāra-sṛṣṭi) *f.* creation of various forms ब्रह्मस्वरूपानुपमर्दनानेकाकारसृष्टिः ŚrutaPra. ii. 270. 31 (*on* ii. 1. 31)

**अनेकाकारस्वाप्नप्रपञ्च** (anekākāra-svāpnaprapañca) *m.* dream-world involving various forms जीवात्मनि स्वरूपानुपमर्देननानेकाकारस्वाप्नप्रपञ्चसृष्टिवत् SiddhāLeSaṁ.59.4.

**अनेकाकारात्मक** (anekākārātma-ka) *adj.* of the nature of having various forms यत् किलानेकाकारात्मकं भासते, तस्मादनाकारमेव वस्तु Kāśi. ii. 180. 18 (*on* 5(3). 218)

**अनेकाकारायोग** (anekākārāyoga) *m.* untenability of more than one form अनेकाकारायोगादेकस्यातिप्रसङ्गाच्च PramāVā SvopVṛ.35.26; HetuBiṬ.31.6.

**अनेकाकारोपेत** (anekākāropeta) *adj.* associated with various forms किम् ... एकाकारं ब्रह्म उत प्रपञ्चवदनेकाकारोपेतम् BrahmSūBh. (Śaṅ.) 589. 17 (*on* iii. 2. 21)

**अनेकाकिन्** (án-ekākin) *adj.* [*f.*-inī] i not alone, i.e. associated together with other (metres) अ॒नेका॑कि॒न्येव॒ त्रि॒ष्टुम्मा॒ध्यंदि॑न॒ꣳ सव॑नं वहति ... बृहत्या चानेकाकिनी ज॒गती तृ॒तीयसव॒नम् ŚatBr. IV. ii. 5. 20; ŚatBr. (K.) V. iii. 1. 14; स्तोत्रपङ्क्त्यानेकाकिनी गायत्री प्रा॒तःसव॒नं वहति ŚatBr. IV. ii. 5. 21; ŚatBr.(K.) V. iii. 1. 14; हविष्पङ्क्त्यानेकाकिनी गायत्री प्रातःसवनं वहति ŚatBr. IV. ii. 5. 22; ŚatBr. (K.) V. iii. 1. 14; ii not alone, i.e. accompanied by paraphernalia अनेकाक्येकेनामन्व्यथो वरः DvyāśraKā.19.74(comm.महापरिवारान्वितः)

**अनेकाकृति** (anekākṛti) *f.* various forms मम क्षेत्रे ... वासुदेवैरधिष्ठिते। अनेकाकृतिभेदस्थैः ... व्रजन्ति ये PauṣkS. 36. 29; तस्मिन्ननेकाकृतिविकल्पान्यपद्रव्याणि योजयेत् KāmSū. 369. 3 (7. 2)

**अनेकाकृति** (anekākṛti) *adj.* having various forms पश्यामः केवलं तेजः ... अनेकाकृति चाद्भुतम् BhaviP. 229B. 32 (i. 154. 10)

**अनेकाकृतिविशेष** (anekākṛtiviśeṣa) *m.* various particular shapes (व्रणः) नानाशस्त्राभिघातविशेषादनेकाकृतिविशेषान् पुष्णाति Hastyāyur. 370. 16 (3. 2)

[1]**अनेकाक्ष** (anekākṣa) *m.* 1 more than one eye बहुतरत्वाद् रूपादीनां चैकाक्षजज्ञानायोग्यत्वात् युगपदनेकाक्षजानेकज्ञानासंभवात् IṣṭaSi. 283. 17; 2A name of a place राज्ञा कृतैरनेकाक्षे सोयाने राजवेश्मभिः RājTa. (Śrī.) 3. 184; 2B epithet of Indra (*lit.* many-eyed one) राज्ञा कृतैः ... राजवेश्मभिः। यद्दर्शनादनेकाक्षो नूनं स्वमभिनिन्दति RājTa. (Śrī.) 3. 184.

[2]**अनेकाक्ष** (anekākṣa) *m.* more than one piece of dice अक्षत्वेनैकाक्षबोधे एवास्य साधुत्वं न तु तेन रूपेणानेकाक्षबोधे LaŚabdeŚe. i. 538. 12.

**अनेकाक्षर** (anekākṣara) *adj.* A containing more than one syllable or letter अयं तु चादीनां प्रादीनां चैकाक्षराणामनेकाक्षराणां वा पदान्ते यतावन्तादिवद्भाव इष्यते MṛtaSaṁ. 153. 6 (*on* 6. 1); ChandaśCū. i. 16. 83; एकाक्षरं यद् विश्रुतं ह्यनेकाक्षरं कथं भूतम् GopāloTāU. 17 (597. 5); (used as noun) a variety of *akṣarayamaka* (repetition of more than one syllable) अक्षरयमकं त्वेकाक्षरमनेकाक्षरं च KāvyālaṅSū. 38. 20 (*on* iv. 1.2); B containing many syllables or letters अनेकाक्षरयोः (लिङ्गयोः) त्वसंयोगाद् यवौ Kātan. ii. 2. 59; iii. 2.12; iii. 4. 58; (यतिः) पूर्वपदसंबद्धानामनेकाक्षराणां तु क्रियते KāvyKaVṛ. 13.29(1.2)

**अनेकाक्षर** (anekākṣara) *n.* 1A polysyllable or polysyllabic word थानेकाक्षरेण CaturA. 4. 15; 1B more than one letter ए च कश्च एकारककारौ तौ चेतराण्यनेकाक्षराणि च LalitāTriBh. 262. 11 (*on* 5); 2 many illusions अनेकाक्षरेषु ... आकृतिः ... यस्याः सा LalitaTriBh. 262. 13 (*on* 5)

**अनेकाक्षरणिधन** (anekākṣara-ṇidhana) *adj.* (Sāman) whose final or concluding part (*nidhana*) consists of more than one syllable उष्णिक्षु बार्हतानामनेकाक्षरणिधनानि चात्र भूयिष्ठानि सामानि LāṭyāŚS. x. 1. 15; DrāhyŚS. xxviii. 1. 22.

**अनेकाक्षरसंज्ञा** (anekākṣara-saññā) *f.* technical term containing many letters एतद्य लघ्वर्थत्वात् संज्ञाकरणस्यैकाक्षरायां संज्ञायां कर्तव्यायामनेकाक्षरसंज्ञाकरणाल्लभ्यते Nyās. i. 169. 13 (*on* i. 2. 29)

**अनेकाक्षरान्त्य** (anekākṣarāntya) *adj.* occurring at the end (of a word) having more than one syllable अभिनिधानं कृतसंहितानां स्पर्शान्तःस्थानाम्। ... अन्तःस्थाः ... वा तु अनेकाक्षरान्त्याः ṚPrāti. 6. 7.

**अनेकाक्षि** (anekākṣi) *n.* many eyes अनेकाक्षिभिरञ्जितानि। ... वक्त्राणि Vidvanmo. 8. 18.

**अनेकाक्षौहिणी** (anekākṣauhiṇī) *f.* many armies (each one) consisting of ten *anīkinīs* मण्डलेश्वराः। अनेकाक्षौहिणीयुक्ताः पार्थिवाधिपतेर्नृपे Brahmāṇḍa ii. 38. 20; त्वां व्याहरत्योषा ... अनेकाक्षौहिणीरुण्डैर्भूः PāṇḍaC. 14. 4; cf. अक्षौहिणी A.

**अनेकाख्य** (anekākhya) *adj.* having various appellations मोहः ... श्लिष्टो भवत्यनेकाख्यः YogVā. iii. 117. 13.

**अनेकाख्यात** (anekākhyāta) *n.* A more than one finite verb न च निमित्तत्वादिभिर्विना अनेकाख्यातैकवाक्यत्वं घटते TantrVā. 1068. 25 (*on* iii.5.53); B many finite verbs अनेकाख्यातानुगुण्यादाह MayūMāli. 408. 9 (*on* v.1.1)

**अनेकाख्यात** (anekākhyāta) *adj.* (used as noun) (variety of sentence) containing many finite verbs वाक्यं दशधा ... अनेकाख्यातम् ... अध्याहृतम् KāvyMī. 23. 9.

**अनेकाख्यातप्रत्यय** (anekākhyātapratyaya) *m.* more than one verbal suffix एकानेकाख्यातप्रत्ययसंबद्धाः सर्वे धातवः TantrVā. 442. 19 (*on* ii. 2.1)

**अनेकाख्यातयोग** (anekākhyāta-yoga) *m.* association with more than one finite verb अनेकाख्यातयोगेऽपि वाक्यं न्याय्यमवादयोः। एकमेवेष्यते VākyaPa.2.353.

**अनेकाख्यातार्थ** (anekākhyātārtha) *m.* several verbal meanings अतोऽत्र षष्टिस्त्रिष्टुभो माध्यंदिने सवनमितिवदनेकाख्यातार्थोद्देशेन भावनाप्राधान्यविधिः BhaṭṭCin.i. 84. 6 (*on* i. 1. 4)

**अनेकागम** (anekāgama) *m.* i many scriptures अनेकागमैः स्वं जनं बोधयन्तम् ... गणेशं नमामः GaṇeP. i. 13. 8; ii many philosophical texts तत्त्वं चाद्वैतात्मस्वरूपमेवेत्यनेकागमपर्यालोचनतो निरणायि NyāyMa. 289. 9; iii many Tāntric texts शिवधर्माः ... अनेकागमसंवीताः ... कापालिकानां भेदाश्च प्रोक्ताः SkandP. i (1). 32.2.

**अनेकाग्नि** (anekāgni) *m.* more than one sacrificial fire विप्रायेत्येकवचनमेकाग्निविधानपक्षे अनेकाग्निविधानपक्षे तु प्रकृतिभूततुलापुरुषदानवदाचार्यादीनां विभागव्यवस्था CaturCin. i. 268. 9; अनेकाग्न्युत्पादकत्वं तु ... आयतबहुत्वविवक्षाबलात् BhāṭṭDī. ii. 208. 14 (*on* v. 4. 3)

**अनेकाग्र** (an-ekāgra) *adj.* [*f* – ā] 1A not concentrated, i.e. distracted अनेकाग्रं तु तं दृष्ट्वा शकुनिः प्रत्यभाषत MahāBhā. ii. 43. 18; ii. 72. 2; ii. 601*(3); iv. 64.2; अणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः ... याति परलोकं समान्तरम् CaraS. v. 11. 3; AṣṭāSaṁ. i. 246. 8 (2.10); AṣṭāHṛ. ii. 5. 62; 1B not firmly inclined to, i.e. fully supportive स चेद् राजन्यनेकाग्रे राज्यविभ्रमशङ्कया। नैवमिच्छसि Rāmā. ii. 20. 22; 2 devoid of any authority निग्रधानामनेकाग्राम् ... नायोध्यां गन्तुमुत्सहे Rāmā. ii. 95. 15; 3 (anekāgra) having many points or tips दीप्तो ज्वालैरनेकाग्रै(v.l.°ग्रै°) रश्मिः MahāBhā. iii. 209. 3; स्वयंभुलिङ्गानि ... । अनेकाग्राणि गोकर्णमातुलुङ्गनिभानि ĪśānŚiPa. ii. 38. 5; ŚilpaRa. ii. 12. 128.

**अनेकाग्र** (anekāgra) *n.* many points चक्षुषोऽनेकाग्रसंपत्त्या ... दृष्टान्तवैषम्यात् AdvaiSi. 849. 25.

**अनेकाग्रता** (anekāgra-tā) *f.* the state of being distracted आत्मैकत्वविद्या ... चित्तस्यानेकाग्रतादोषात् ... नाविद्यातिवर्तिका LaCandr. 867. 32.

**अनेकाग्रमनस्** (anekāgra-manas) *adj.* of distracted mind (नासमाहितः। ... एनमाप्नुयात्) असमाहितः अनेकाग्रमनाः विक्षिप्तचित्तः KaṭhUBh. 136. 11 (*on* 2. 24)

**अनेकाग्रहण** (anekāgrahaṇa) *n.* non- comprehension of many (individuals) गोत्वम् ... कथमनेकाग्रहणे गृह्यते PrakaVi. 539. 17.

**अनेकाग्रहृदय** (anekāgra-hṛdaya) *adj.* of distracted heart or mind स त्वनेकाग्रहृदयः ... अब्रवीत्तत्र राघवः Rāmā. ii. 65. 23.

**अनेकाग्र्य** (anekāgrya) *adj.* having many points अनेकाग्र्यं शृणु लक्षणमस्य MahāU. 5. 9.

**अनेकाङ्कत्व** (anekāṅka-tva) *n.* the state of comprising of many dramatic acts अनेकाङ्कत्वाच्च तादृशरूपकानन्तरमेवाभिधानं (समवकारस्य) युक्तम् AbhinBhā. ii. 437. 12 (*on* 18. 62)

**अनेकाङ्कनामन्** (anekāṅkanāman) *n.* various glorificatory or honorific titles अनेकाङ्कनामसंभावनोद्ग्रीवाननम् ... दाक्षिणात्यं बलम् YaśasCam. i. 462. 5 (comm. नानाविधानाम् अङ्कनाम्नां बिरुदावल्यविधेयानाम्)

**अनेकाङ्कुरादिकार्य** (anekāṅkurādikārya) *n.* various effects or products like shoots etc. व्रीहिबीजमनेकाङ्कुरादिकार्यव्यवधानेन पुनः सजातीयबीजान्तरमुत्पादयति VivaPraSaṁ. 41. 7.

**अनेकाङ्ग** (anekāṅga) *adj.* Ai having many subordinates or subsidiaries अनेकाङ्गं च तत्रार्घ्यं योजयेदस्त्रसंस्कृतम् JayāS. 13. 65; Aii having more than one subsidiary उपासनमेकानेकाङ्गतया द्विविधम् GoviBh. 239. 3 (*on* iii. 3.32); B of many types नाटकादौ तु भूयस्तरं चरितमनेकाङ्गत्वकवर्गेण विना ... AbhinBhā. ii. 437. 7 (*on* 18. 62)

**अनेकाङ्ग** (anekāṅga) *n.* A various ancillary sciences of the Vedas अनेकाङ्गोपाङ्गोपकरणतयापीत्याह Bhām. 72. 9 (*on* i. 1. 3); B more than one limb यदा तु एककाल एव अनेकाङ्गविषयं कण्डूयनं तदा स्मृत्यविच्छेदादनावृत्तिः BhāṭṭDī. iv. 212.1 (*on* xi. 4. 16);

**अनेकाङ्गप्रधान** (anekāṅgapradhāna) *n.* various subsidiary and principal acts अनेकाङ्गप्रधानानां विनापूर्वेण साहित्यासंभवात् NyāyRa. 683. 12 (*on* 5 (16). 8); MīmāKau. ii. 320. 10 (*on* iii. 3. 9)

**अनेकाङ्गवाक्य** (anekāṅga-vākya) *n.* sentence enjoining various subsidiaries (of a principal act) तस्य चानेकाङ्गवाक्यतदर्थतत्प्रयोजनालोचनमध्यस्य ... प्रसिद्धिः TantrVā. 872. 19 (*on* iii. 3. 14)

**अनेकाङ्गविकलता** (anekāṅgavikala-tā) *f.* the state of being deficient in many parts or members ननु चात्रेच्छा इषिकर्मत्वमिषिसमानकर्तृत्वमपि नास्ति इत्यनेकाङ्गविकलता Prasā. ii. 327. 7

**अनेकाङ्गहारिन्** (anekāṅgahārin) *adj.* consisting of many compositions of the movements of limbs (in dance) भाणे चैकाकी वा यो योज्योऽनेकाङ्गहारिणि AbhinBhā. i. 170. 21 (*on* 4. 261)

**अनेकाङ्गाररूप** (anekāṅgāra-rūpa) *n.* [Inst.] in the form or pretext of burning charcoals तारकाः पिहिता अपि। अनेकाङ्गाररूपेण बभूवुर्द्विगुणा इव RājTa. (Prā.) 622.

**अनेकाङ्गिन्** (anekāṅgin) *m.* name of an attendant of Śiva अतिमूर्तिरनेकाङ्गी क्रूरः ... । गणाधिपाः शिवस्य TantrSa. 9. 167.

**अनेकाङ्घ्रि** (anekāṅghri) *m.* many feet स्थलम् ... प्रतिष्ठाप्य ...। चतुष्पादसमायुक्तमनेकाङ्घ्रियुता (स्थला) यदि PauṣkS. 4. 109.

**अनेकाङ्घ्रिकरान्वित** (anekāṅghrikarānvita) *adj.* possessing many feet and hands अनेकाङ्घ्रिकरान्वितम्। ... अनेकमन्त्रकोटिभिः संस्मरेत् सेवितम् JayāS. 21. 230.

**अनेकाच्** (anekāc) *adj.* A (nominal base or stem) having more than one vowel घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः P. vi. 3. 43; MahāBh. iii. 158. 21 (*on* vi. 3. 43); इणो यण्भवति तत एरनेकाचः MahāBh. iii. 19. 6 (*on* vi. 1. 12); iii. 106. 25 (*on* vi. 1. 168); iii. 159. 5 (*on* vi. 3. 43); झरूपकल्पचेलड्ब्रुवगोत्रमतहते प्रोऽनेकाचः JaineVyā. iv. 3. 155; ŚākaṭāVyā. ii. 2. 53; MugdhaBo. 3. 59 (18. 9); PrakriKau. i. 927. 6; SiddhāKau. 214A. 11 (*on* vi. 3. 43); B (verbal root or base) having more than one vowel, i.e. polysyllabic एरनेकाचोऽसंयोगपूर्वस्य P. vi. 4. 82; MahāBh. iii. 188. 12 (*on* vi. 4. 82); क्रियासमभिहारे यङ्वचनादनेकाचोऽहलादेर्हनभिधानम् MahāBh. ii. 29. 7 (*on* iii. 1. 22); ii. 44. 17 (*on* iii. 1. 35); ii. 133. 10 (*on* iii. 2. 146); iii. 202. 17 (*on* vi. 4. 52); iii. 211. 7 (*on* vi. 4. 87); JaineVyā. ii. 1. 31; iv. 2. 61; अनेकाचो लिट आम् कृभ्वस्तिलिट् चानु CāndraVyā. i. 1. 51; iv. 4. 41; v. 1. 102; v. 3. 88; धातोस्तिकारकसमस्तानेकाचोऽतत्संयोगाद्यज्योः ŚākaṭāVyā. i. 2.38; i. 4. 83; अनेकाचः ... अनुप्रयोगः SaraKaṇṭhā. (Gr.) i. 3. 69. v. 4. 70; र्वृइजांदिदयासत्यानेकाचोऽनृछ्ऊर्णोषु ठ्याम् आम् MugdhaBo. 8. 55 (87. 13); 8. 112 (97. 5); अस्य च विशेषाभावादनेकाजुदाहृतः PadMañ. *on* KāśiVṛ. *on* P. vi. 1. 194 (675. 11); ये अनेकाचो धातवस्तन्निवृत्त्यर्थत्वात् PariVṛ. (Sī.) 143.6; अनेकाचोऽङ्गस्य धातोरिवर्णस्य यण् स्यादचि PrakriKau. i. 164. 6; i. 172. 2; ii. 204. 6. ii. 304. 1; SiddhāKau. 366A. 6 (*on* vii. 4. 94); C (word or affix) having more than one vowel यस्तर्ह्यनेकाच् दधृगिति MahāBh. ii. 106. 15 (*on* iii. 2. 58); अनियतस्वरप्रत्ययप्रसङ्गेऽनेकाक्षु च प्रत्ययेषु KāśiVṛ. *on* iii. 1. 3; Nyās. ii. 489. 15 (*on* iii. 1. 3); Prasā. ii. 753. 20; व्रीह्यादतोऽनेकाचः ŚākaṭāVyā. iii. 3. 153; हुश्नुभ्वो: अनेकाचो: असंयोगपूर्वो वर्णस्य यण् स्यादचि सार्वधातुके PrakriKau. ii. 117. 6; SiddhāKau. 325A. 21 (*on* v. 4. 57)

**अनेकाच्** (anekāc) Gr. 1 the word or expression *anekāc* एकाजनेकाज्ग्रहणेषु चानुपपत्तिः Vār. 7 *on* ŚivSū. (Gr.) 1; MahāBh. i. 17. 2 (*on* ŚivSū. (Gr.) 1); इतावनेकाज्ग्रहणं कर्तव्यम् MahāBh. iii. 77. 3 (*on* vi. 1. 98); ii. 300. 20 (*on* vii. 2. 67); 2 more than one vowel, cf. **अनेकाच्त्वA**.

**अनेकाचारविधान** (anekācāra-vidhāna) *n.* prescription of more than one practice अतश्च एकेनैव शास्त्रेण अनेकाचारविधानोपपत्तेरेकश्रुतिमूलकत्वेनाचार-प्रामाण्योपपत्तिः MīmāKau. i. 45. 8 (*on* i. 3. 7)

**अनेकाचार्यसंकीर्तन** (anekācārya-saṅkīrtana) *n.* glorificatory mention of (the names of) several teachers उदात्तपरस्येति वक्तव्य उदयग्रहणं मङ्गलार्थम्। अनेकाचार्यसंकीर्तनं पूजार्थम् KāśiVṛ. *on* viii. 4. 67.

**अनेकाचार्यसेविन्** (anekācārya-sevin) *adj.* who serves, i.e. studies under many teachers अनेकाचार्यसेवी हि भवान्, तच्छृणवाम BṛĀraUBh. 496. 2 (*on* iv. 1. 2)

**अनेकाच्कोपदेश** (anekāckopadeśa) *m.* teaching (of the root) consisting of more than one vowel एकत्वविवक्षया तद्वतो ग्रहणेन च सिद्धे एकग्रहण-सामर्थ्यादनेकाच्कोपदेशो व्यावर्त्यते SiddhāKau. 348A. 5 (*on* vii. 2. 10)

**अनेकाच्त्व** (anekāc-tva) *n.* (Gr.) A the state of being more than one vowel एकाजनेकाज्ग्रहणेषु चावृत्तिः संख्यानादनेकाच्त्वं भविष्यति MahāBh. i. 17. 23 (*on* ŚivSū (Gr.) 1); B the state of (verbal root or affix) having more than one vowel (निपातनम्) द्विर्वचने कृतेऽनेकाच्त्वात्र प्राप्नोति MahāBh. ii. 116. 14 (*on* iii. 2. 109); सुबन्तस्याङ्गस्यानेकाच्त्वात्सीयुडादेरिडागमो भवति Pradī. iii. 81A. 30 (*on* iii. 1. 34); iii. 185A. 23 (*on* iii. 2. 109); अनेकाच्त्वादिट्। दरिद्रितः PrakriKau. ii. 563. 4; अचीचकासदिति। ... अनेकाच्त्वाद्वा सन्वद्भावो दीर्घश्चेति केचित् Prasā. ii. 304. 12; ii. 576. 22; वधेर्हन्त्युपदेशे एकाचोऽपि न निषेधः आदेशोपदेशेऽनेकाच्त्वात् SiddhāKau. 348A. 7 (*on* vii. 2. 10)

**अनेकाच्त्वानुपपत्ति** (anekāctvānupapatti) *f.* untenability of the state of having more than one vowel हेतोराकारान्तानां कृतद्विर्वचनानामप्यनेकाच्त्वानुपपत्तेः Nyās. ii. 198. 21 (*on* vi. 1. 1)

**अनेकाच्त्वाभाव** (anekāctvābhāva) *m.* absence of the state of having more than one vowel अत्रारुचिबीजपट आभीयतयासिद्धत्वेनानेकाच्त्वाभावः LaŚabdeŚe. ii. 567. 15.

**अनेकाजर्थ** (anekāj-artha) *m.* [Loc.] for the sake of (verbal root or base) having more than one vowel तत्राद्यानां त्रयाणां चुरादिण्यन्तानां अनेकाजर्थे ग्रहणम् Prasā. ii. 348. 18.

**अनेकाजर्थम्** (anekājartham) *adv.* for the sake of (verbal root or base) having more than one vowel सूच्यादिभ्यो यङ् वक्तव्यः, किमर्थम्। सूच्यादीनामने-काजर्थम् ... सोसूच्यते PadMañ. *on* KāśiVṛ. *on* P. iii. 1. 22 (382.9)

**अनेकाजहलाद्यर्थम्** (anekājahalādyartham) *adv.* for the sake of (verbal root or base) having more than one vowel and not beginning with consonant सूचिसूत्रिमूत्र्यट्यर्त्यश्यूर्णुग्रहणं यङ्विधौ। अनेकाजहलाद्यर्थम् MahāBh. ii. 29. 16 (*on* iii. 1. 22); KāśiVṛ. *on* iii. 1. 22.

**अनेकाजादेश** (anekāj-ādeśa) *m.* polysyllabic substitute वधशब्दोऽकारा-न्तोऽनेकाजादेशः Pradī. vi. 109. 14 (*on* vii. 2. 10)

**अनेकाजुत्तरपदार्थ** (anekājuttarapadārtha) *adj.* meant for that (compound) whose second member is polysyllabic अनेकाजुत्तरपदार्थ आरम्भः Nyās. ii. 1113. 14 (*on* viii. 4. 13); Prasā. i. 678. 20; LaŚabdeŚe. ii. 180.5.

**अनेकाज्ञान** (anekājñāna) *n.* 1 many kinds of ignorance तापत्रयपरिश्रान्त-मनेकाज्ञानजृम्भितम्। ... त्राहि मां कृपयाच्युत SkandP. ii(3). 3. 55; 2 more than one wrong cognition or nescience अद्वैतवादे ... अप्रामाणिकस्य च भ्रान्तस्य तस्य एकाज्ञानप्रयुक्तत्वसंभवात् न अनेकाज्ञानकल्पना युक्ता TarkSaṁ. (Ā.) 140. 7.

**अनेकाज्ञानपक्ष** (anekājñāna-pakṣa) *m.* view that ignorance is of more than one (type) अज्ञानैक्यं तु सर्वावस्थानुस्यूतैकाकारमादाय। ... अनेकाज्ञानपक्षे तु शङ्कापि नोदेति AdvaiSi. 487. 18.

**अनेकाज्ञानवाद** (anekājñāna-vāda) *m.* theory that ignorance is of more than one (type) तेषामज्ञानविशेषत्वेऽनेकाज्ञानवादापातात् Nyāyāmṛ. 230A. 8; अनेकाज्ञानवादे च साक्षिभेदः स्फुट एवेति सिद्धमज्ञानोपहितः साक्षीति SiddhāTa. 13. 25.

**अनेकाज्ञानस्थान** (anekājñāna-sthāna) *n.* locus or abode of manifold ignorances or nesciences कल्पिता एवेति संबन्धः। नानासंवृतिभूमिषु। अनेकाज्ञानस्थानेष्वन्तःकरणेषु NyāySu. (Ja.) 410B. 8 (*on* ii. 2. 8)

**अनेकाज्ञानाङ्गीकारायोग** (anekājñānāṅgīkārāyoga) *m.* untenability of the acceptance of more than one (type of) ignorance विषयात्पूर्वमज्ञानमस्तीति निरस्तम्। प्रतिविषयमनेकाज्ञानाङ्गीकारायोगात् Nyāyāmṛ. 231B. 6.

**अनेकाज्ञानाभ्युपगम** (anekājñānābhyupagama) *m.* acceptance of more than one (type of) ignorance एकस्मिन्नपि विषयेऽनेकाज्ञानाभ्युपगमे न कश्चिद्दोषः IṣṭaSi. 64. 8.

**अनेकाज्व्यावृत्ति** (anekāj-vyāvṛtti) *f.* exclusion of more than one vowel तद्धि नानेकाज्व्यावृत्तये तत्र लिट्याम: सत्त्वान्मन्त्रे तथा प्रयोगाभावाच्च LaŚabdeŚe. ii. 797. 4.

**अनेकाणु** (anekāṇu) *m.* A more than one atom अनेकया बुद्ध्या क्रमेण ग्रहणायोगात्। ... अनेकाणुव्यत्ययनिमेषतुल्यकालत्वादन्त्यवर्णपरिसमाप्तेः PramāVā-SvopVṛ. 80. 3; B many atoms अनेकाणुसमूहात्मा स तथा हि प्रतीयते TattvSaṁ. 327; 1734; C many minute particles नर्तकीभ्रूलताभङ्गो नैवैकः परमार्थतः। अनेकाणुसमूहत्वादेकत्वं तस्य कल्पितम् TattvSaṁ. 200.

being assumed due to the diversity of the internal organ त्वन्मते त्वात्मभेदस्यान्तः-करणभेदकल्पितत्वात् ŚrutaPra. ii. 226. 2 (*on* ii. 1. 12)

**अन्तःकरणभेदतस्** (antaḥkaraṇabheda-tas) *adv.* on account of, i. e. in accordance with the diversity of the internal organ बद्धमुक्तव्यवस्थार्थमन्तः-करणभेदतः। जीवभेदं परे प्राहुः VedāntSiSūMañ. 1.45.

**अन्तःकरणभेदस्फुरण** (antaḥkaraṇabheda-sphuraṇa) *n.* manifestation of the distinction of the internal organ भेदग्राहकत्वे तु विपरीतसंस्काररूपदोषा-भावस्यान्तःकरणभेदस्फुरणापेक्षणीयत्वात्तदभावान्न तादृशस्फुरणम् GuruCandr. ii. 241. 16.

**अन्तःकरणभेदाभाव** (antaḥkaraṇabhedābhāva) *m.* absence of the distinction of the internal organ सुषुप्तप्रलीनमुक्तानामन्तःकरणभेदाभावेन संसारिदुःखा-द्यनुभवापाताच्च Nyāyāmṛ. 580B. 7.

**अन्तःकरणमध्येभवत्व** (antaḥkaraṇamadhye-bhavatva) *n.* existence, i. e. manifestation in the internal organ इह अन्तःकरणे बुद्धिदर्पणात्मनि नीलादीनामवभासानामान्तरत्वमप्यस्ति अन्तःकरणमध्येभवत्वात् PratyabhiVi. i. 410.4 (*on* i. 8. 6) (Bhāsk. अन्तःकरणे ... भवत्वात् स्फुरत्वादिति)

**अन्तःकरणमन्दिर** (antaḥkaraṇa-mandira) *n.* mansion in the form of the mind अन्तःकरणमन्दिराद्वाहभीतमिव निर्जगाम धैर्यम् UdaySuKa. 99. 13.

**अन्तःकरणमलिनविशेष** (antaḥkaraṇa-malinaviśeṣa) *m.* particular impurity of the internal organ कस्मादज्ञानप्राबल्यम् ... अत्यन्तान्तःकरणमलिनविशेषात् TripāMaNāU. 367. 5 (5)

**अन्तःकरणमात्रांश** (antaḥkaraṇamātrāṁśa) *m.* aspect of internal organ only अन्तःकरणमात्रांश एवोक्तानुपपत्तेः तच्छङ्कासमाधानयोरौचित्यात् GuruCandr. iii. 50. 16; LaCandr. 596. 29.

**अन्तःकरणमात्राश्रयत्व** (antaḥkaraṇamātrāśraya-tva) *n.* the state of being what exists in the internal organ only परोक्षज्ञानस्य च विषयेन्द्रियसंनिकर्षा-भावेनान्तःकरणमात्राश्रयत्वात् SiddhāBi. 65. 8.

**अन्तःकरणमाथिन्** (antaḥkaraṇa-māthin) *adj.* stirring, i. e. disturbing the mind अन्तःकरणमाथिभिः करुणवचनैः पुनः पुनर्विधिमुपालभमानाम् ... अङ्गनामद्राक्षम् TilaMañ. 379. 3.

**अन्तःकरणमालिन्यविशेष** (antaḥkaraṇa-mālinyaviśeṣa) *m.* particular impurity of the internal organ कस्मादज्ञानप्राबल्यम् ... अत्यन्तान्तःकरणमलिन-(v. l. °मालिन्य Viśva.) विशेषात् TripāMaNāU. 367. 5 (5)

**अन्तःकरणयन्त्र** (antaḥkaraṇa-yantra) *n.* machine in the form of the internal organ, i. e. the mind सापि ... विलोक्य चित्रगतामुदयसुन्दरीम् ... अन्तःकरणयन्त्रादुद्गतेनेव बाष्पाम्भसा भरितलोचनद्रोणिः ... रोदितुमारेभे UdaySuKa. 116. 26.

**अन्तःकरणयागादि** (antaḥkaraṇayāgādi) *adj.* beginning with the mental worship अन्तःकरणयागादि यावदात्मनिवेदनम्। तदाद्यमङ्गं यागस्य JayāS. 22. 75; PāraS. 9. 180.

**अन्तःकरणयुक्त** (antaḥkaraṇa-yukta) *adj.* associated with, i.e. possessing the internal organ अन्तःकरणयुक्तो हि जीवः कर्मकृतो लोके फलममृतव्यपदेश्यं भुङ्क्ते BrahmSūBh. (Bhā.) 41. 5 (*on* i. 2. 11)

**अन्तःकरणयोग** (antaḥkaraṇa-yoga) *m.* **1** association with, i. e. conditioning by the internal organ अन्तःकरणयोगाद्धि जीव इत्युच्यते च यः। अविद्याकार्यरहितः परमात्मेति गीयते BṛNāraP. 36. 28; **2** internal organ and application यदि च कार्योन्नेयमेव विज्ञानम्, अन्तःकरणयोगसंस्कारादिवद-खिलजनप्रसिद्धिगोचरो न स्यात् NyāyKu. 78. 21.

**अन्तःकरणरतितान्ता** (antaḥkaraṇarati-tāntā) *adj.* (*f.*) afflicted with the love at heart उदञ्चद्रोमाञ्चा व्यलसदपरिस्पन्दसकलप्रतीका काप्यन्तःकरणरतितान्तेव तरुणी TārāŚa. 23.

**अन्तःकरणरूप** (antaḥkaraṇa-rūpa) *adj.* **Ai** of the nature of the internal organ, i. e. the intellect अन्तःकरणरूपाय तस्मै विश्वात्मने नमः ViṣṇuP. i. 14. 35; SāṁkhyaPraBh. 51. 12 (*on* 1. 104); YogVār. *on* 1. 4; **Aii** of the nature of the Intellect (the second of twenty-five principles) नन्वन्तःकरणरूपं महत्तत्त्वं चेत् प्रयत्नाश्रयः तर्हि तेनैव चेतनेन भवितव्यम् SarvaDaKau. 106. 17; गुणसाम्यावस्थारूपायां प्रकृतावन्तःका(?क)रणरूपे तद्विकार इव व्यक्ते ज्ञानक्रिये न स्तः ŚivārkaMaDī. i. 192. 13 (*on* i. 1. 5); **B** of the form of the internal organ, i.e. the mind न चान्तःकरणरूपेण द्रव्येण घटेनाकाशस्येव चैतन्यस्यावच्छेद-संभवात् तदवच्छिन्नमेव चैतन्यं जीवोऽस्त्विति वाच्यम् SiddhāLeSaṁ. 69. 3; 88. 5; उपाधिरविद्याभूतोऽन्तःकरणरूपो वा VedāntRaMañ. 1 (7. 1)

**अन्तःकरणरूप** (antaḥkaraṇa-rūpa) *n.* peculiar form of the internal organ आत्मीयमन्तःकरणरूपमपिधाय ग्राह्यसमापन्नं ग्राह्यतामिव प्राप्तमिति यावत्। अतो ग्राह्यस्वरूपाकारेण निर्भासते TattvVai. 43. 27 (*on* 1. 41)

**अन्तःकरणरूपपरिणाम** (antaḥkaraṇarūpa-pariṇāma) *m.* modification which is of the form of the internal organ गुणान्तरभेदेनान्तःकरणप्रकृतेरपि परिच्छिन्नान्तःकरण-रूपपरिणामोपपत्तेः YogSā. 73. 11 (4)

**अन्तःकरणरूपबुद्धि** (antaḥkaraṇarūpa-buddhi) *f.* intellect which is of the form of the internal organ विज्ञानशब्देन नात्मनो व्यपदेशोऽपि त्वन्तःकरण-रूपबुद्धेरेव VedāntDī. 127. 2 (*on* ii. 3. 35)

**अन्तःकरणरूपाहंकार** (antaḥkaraṇarūpāhaṅkāra) *m.* ego which is of the form of the internal organ आत्मा वा ज्ञातृत्वकर्तृत्वाहंत्वादिरहितः, निर्विकारत्वात्, अन्तःकरणरूपाहंकारव्यतिरिक्तत्वात् ŚatDū. 126. 20.

**अन्तःकरणरूपिणी** (antaḥkaraṇarūpiṇī) *adj.* (*f.*) having the form of the internal organ, pw.

**अन्तःकरणरूपोपाधि** (antaḥkaraṇarūpopādhi) *m.* adjunct or condition which is of the form of the internal organ, i. e. the mind एवमन्तःकरणरूपोपाधि-भेदात्परमात्मनः परस्परतश्च जीवानां भेदः Aparā. 973. 19 (*on* 3. 66); 1002. 20 (*on* 3. 143); तत्राप्येकस्य विभोरात्मनः सर्वैरन्तःकरणरूपोपाधिभिरवच्छिन्नत्वात् सर्वेषामुपहितानां सर्वज्ञातृत्वं समानम् VedāntRaMañ. 1 (17. 2); अविद्यान्तःकरण-रूपोपाधिभेदे ... सति ... सुतरामुपहितभेदेन प्रत्यभिज्ञानविरोधो दुस्तरः Nyāyāmṛ. 376B. 6; 580B. 4; न हि वयं किंचिदुपाधिमात्रमननुसंधानप्रयोजकं ब्रूमः किं त्वन्तःकरणरूपोपाधिभेदमविद्याभेदं वा AdvaiSi. 815. 25; अन्तःकरणरूपोपाधिभेदं तन्मनोऽन्यमनः LaCandr. 815. 40.

**अन्तःकरणलक्षण** (antaḥkaraṇa-lakṣaṇa) *n.* definition of the internal organ, i. e. the mind (दशलक्षण्याम्) आह्निकद्वययुक्ते तृतीय आत्मान्तःकरणलक्षणम्। तत्राप्यात्मलक्षणं प्रथमे। द्वितीयेऽन्तःकरणलक्षणम् SarvaDaSaṁ. 10. 19.

**अन्तःकरणलक्ष्मी** (antaḥkaraṇalakṣmī) *f.* name of a mystic formula *bam pham pam prīm* अन्तःकरणलक्ष्मीस्तु तर्कमुद्राविधारिणी LakṣmīT. 44. 38.

**अन्तःकरणलय** (antaḥkaraṇa-laya) *m.* dissolution, i. e. merging of the internal organ त्वन्मते प्रत्यहं सुषुप्तावन्तःकरणलयेऽपि पूर्वेद्युरहं दुःखीत्यनुसंधानात् Nyāyāmṛ. 580B. 6.

**अन्तःकरणलयसहित** (antaḥkaraṇalaya-sahita) *adj.* accompanied by the dissolution, i. e. merging of the internal organ स्वप्नावस्थाज्ञानस्यैवान्तः-करणलयसहितस्य सुषुप्तिरूपत्वात् SiddhāBi. 114. 2.

**अन्तःकरणलयहेतु** (antaḥkaraṇalaya-hetu) *m.* cause of the dissolution, i. e. merging of the internal organ यज्ञदत्तोऽयम् अन्तःकरणलयहेत्वदृष्टवान्, सुषुप्तौ लीयमानान्तःकरणत्वात् VivaPraSaṁ. 59. 13.

**अन्तःकरणवत्** (antaḥkaraṇa-vat) *adv.* like from the internal organ अथ प्रमाणज्ञानं न चैतन्यम्, अपि त्वन्तःकरणवृत्तिरूपत्वाज्जडरूपमिति चेत् तर्ह्यन्तःकरणवत्तस्मादपि विषयोपलब्धिर्न स्यात् NītiMā. 15. 4.

**अन्तःकरणवर्तिन्** (antaḥkaraṇa-vartin) *adj.* [*f.* - ī] **A** existing in the internal organ, i. e. the mind वासना आशयाः प्रोक्ताः क्लेशकर्मविपाकजाः। अन्तःकरणवर्तिन्यः समन्ताच्छेरते हि ताः LakṣmīT. 12. 32; अन्तःकरणवर्तिनं व्यापारमारोप्य चितिशक्तौ कर्तृत्वाभिमानः Bhām. 125. 6 (*on* i. 1. 5); **B** existing in the internal organ, i.e. the Intellect प्रवृत्तिश्च प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्तिनी तथापि पुरुष उपचर्यते SāṁkhyaTaKau. 319. 1 (*on* 18); 16. 1 (*on* 1)

**अन्तःकरणवारण** (antaḥkaraṇa-vāraṇa) *m.* elephant in the form of the heart राजा ... श्रुत्वा द्विजवधूं तस्थौ प्रागेवाङ्कुरितस्मरः। तस्य धावन्त-मुन्मत्तमन्तःकरणवारणम्। बलान्नियमितुं नासीदपवादभयाङ्कुशः RājTa. (Ka.) 1. 251; हे सुन्दर्यः तर्हि नापराधो ममान्तःकरणवारणस्य युष्मदालोकनजनितमदेन धैर्यशृङ्खलामुच्छिन्दतः RasSa. 194 (2)

**अन्तःकरणवासिन्** (antaḥkaraṇa-vāsin) *adj.* dwelling in the heart अन्तःकरणवासिदैवस्वतानुजादेहलावण्येनेव लिप्ताभिः ... निम्नगाभिसारिकाभिर्गाढमुपगूढम् ... अम्भोनिधिमपश्यम् TilaMañ. 120. 18.

**अन्तःकरणविकार** (antaḥkaraṇa-vikāra) *m.* **Ai** feeling of the heart अन्तःकरणविकारं गुरुपरिजनसंकटेऽपि कुलटानाम्। जानन्ति तदभियुक्ता भ्रूभङ्गापाङ्ग-धुरदृष्टेन KuṭṭaMa. 507 (comm. हृदयस्य विकारं विविधां विरुद्धां वा कृतिं विकृतिं भावम् इति यावत्); **Aii** mental attitude 'भावदुष्टिं' कार्पण्यकुत्साकुत्सितत्वाक-प्यारोपादिभिरन्तःकरणविकारैर्दूषितम् CaturCin. iii (1). 608. 6; **B** modification or product of the internal organ, i. e. the mind सर्वं ह्यन्तःकरणविकारमेव जगत् मनस्येव सुषुप्ते प्रलयदर्शनात् MuṇḍUBh. 328. 9 (*on* ii. 1. 4)

**अन्तःकरणविकारत्व** (antaḥkaraṇavikāra-tva) *n.* the state of being modification or product of the internal organ, i. e. the mind सुखदुःखादिष्वनैकान्ति-

कमिति चेन्न। तेषामन्तःकरणविकारत्वाभ्युपगमात् NyāySu. (Ja.) 198B. 8 (on i. 4. 6)

**अन्तःकरणविकारभेद** (antaḥkaraṇavikāra-bheda) *m.* type of modification or product of the internal organ, i.e. the mind इन्द्रियार्थसंनिकर्षादन्तःकरण-विकारभेद उत्पन्नमात्र एव प्रमातुरर्थश्चोपलम्भश्च प्रत्यक्षौ भवतः Bhām. 448. 21 (*on* ii.2.28)

**अन्तःकरणविक्रिया** (antaḥkaraṇa-vikriyā) *f.* **A** modification of the internal organ, i.e. the mind आनन्दबोधयोर्लिङ्गमन्तःकरणविक्रियाः ŚivaP. vii. 15. 17 (562A. 6); **B** agitation of the mind भगवानन्तःकरणविक्रियां तपोबलेन संयम्य तत्कारणाय विष्वग्विलोचनानि व्यापारितवान् PārvPa. 3. 9 (2)

**अन्तःकरणविक्षेप** (antaḥkaraṇa-vikṣepa) *m.* **A** agitation of the mind क्रोधो नाम ... अन्तःकरणविक्षेपः SanatBh. 248. 11 (*on* 2. 16);**B** distraction of or disturbance in the mind कल्पनायाः कारणमन्तःकरणविक्षेपः RasMañ. 128 (2)

**अन्तःकरणविद्यावृत्ति** (antaḥkaraṇa-vidyāvṛtti) *f.* cognitive function of the internal organ, i.e. the intellect अन्तःकरणविद्यावृत्तेरपि ज्ञानशब्दाभिधेयत्वात् ŚaṅkaVi. (Ā.) 85. 16.

**अन्तःकरणविधुर** (antaḥkaraṇa-vidhura) *adj.* devoid of, i.e. free from (modification of) the internal organ मुक्तानामिति। अन्तःकरणविधुराणामपीति NyāySu. (Ja.) 573B. 8 (*on* iii. 4. 4)

**अन्तःकरणविमर्श** (antaḥkaraṇa-vimarśa) *m.* consideration or thought in the mind निश्चलज्ञानवतोऽपि ममान्तःकरणविमर्शस्य विश्वकारणं भगवती, तत्र भगवतो निमित्तकारणत्वमात्रमेव दृश्यते ŚaṅkaVi. (Ā.) 270. 5.

**अन्तःकरणविलय** (antaḥkaraṇa-vilaya) *m.* dissolution, i. e. merging of the internal organ अस्ति तावत्संसारे प्रचुरोऽयमन्तःकरणवृत्तिरूपः कामः ... न चैक एवायम्। मुक्तावन्तःकरणविलयात् NyāySu. (Ja.) 325A. 4 (*on* ii. 2.1)

**अन्तःकरणविशिष्ट** (antaḥkaraṇa-viśiṣṭa) *adj.* **A** qualified, i. e. delimited by the internal organ, i.e. the mind तत्र किमन्तःकरणविशिष्टं चैतन्यं जीवः, उत तदुपलक्षितम् ŚrutaPra. ii. 359. 29 (*on* ii. 3. 18); यस्य भोक्तृत्वम् अन्तःकरणविशिष्टस्य तस्य प्रतिशरीरं भेदः Nyāyāmṛ. 603B. 8; **B** qualified by the internal organ, i.e. thought अविद्याविशिष्टस्यात्मनोऽनुभवितृत्वम्, अन्तःकरण-विशिष्टस्यैय(?व) स्मर्तृत्वम्, इति वैयधिकरण्यम् VivaPraSaṁ. 73. 20; 94. 13; **C** qualified by the internal organ, i.e. the Intellect विशेषणोपाध्योर्भेदस्य सिद्धान्तसंमतत्वेनान्तःकरणविशिष्टः प्रमाता, तदुपहितः साक्षीति भेदोपपत्तेः SiddhāLeSaṁ. 166. 1.

**अन्तःकरणविशिष्टता** (antaḥkaraṇaviśiṣṭa-tā) *f.* the state of being qualified, i. e. delimited by the internal organ ध्याता ...आत्मानमन्तःकरणविशिष्टतया ...अवगच्छन् 'अहं ब्रह्मास्मि' इति ध्यानं कथं वस्तुविषयं मन्येत VivaPraSaṁ. 326. 7.

**अन्तःकरणविशुद्धि** (antaḥkaraṇa-viśuddhi) *f.* purity of the mind अन्तःकरणविशुद्धिं भक्तिं च त्वयि सतीं प्रदेहि विभो SuvarṇaMā. 14.

**अन्तःकरणविशेष** (antaḥkaraṇa-viśeṣa) *m.* distinct or particular type of the internal organ, i. e. Intellect सांख्या हि प्रकृतेः सत्त्वप्रधानं प्रथमं परिणामं महदाख्यमन्तःकरणविशेषं बुद्धिमाहुः Kiraṇā. 258. 6; Upask. 356. 2 (*on* viii. 1.1)

**अन्तःकरणविषय** (antaḥkaraṇa-viṣaya) *m.* object of the internal organ ज्ञानसंकल्पनिश्चयानुसंधानाभिमाना आकाशकार्यान्तःकरणविषयाः TriBrU. 1; किं चाहमित्यनुभवस्यान्तःकरणविषयत्वं वक्ष्यते BhedaDhi. 20. 2.

**अन्तःकरणविषयिणी** (antaḥkaraṇa-viṣayiṇī) *adj.* (*f.*) referring to the internal organ अन्तःकरणविषयिण्यामन्तःकरणाश्रितायां शब्दादिजन्यवृत्तौ आद्यस्य व्यभिचारात् Nyāyāmṛ. 527B. 6.

**अन्तःकरणविसर्पण** (antaḥkaraṇa-visarpaṇa) *n.* movement, i. e. operation of the internal organ अन्तःकरणविसर्पणे हि भोक्तारो विसर्पन्ति आ लोमभ्य आ नखाग्रेभ्यः ŚrutaPra. ii. 450. 21 (*on* iii. 2. 29)

**अन्तःकरणवृक्ष** (antaḥkaraṇa-vṛkṣa) *m.* tree in the form of the internal organ अत्र वाक्ये बीजाङ्कुरन्यायेनैकस्यैवान्तःकरणवृक्षस्य वृत्तिमात्ररूपेण चित्ताद्याख्यावस्थाभेदाः ...उक्ताः SāṁkhyaPraBh.34. 11 (*on* 1. 64)

**अन्तःकरणवृत्ति** (antaḥkaraṇa-vṛtti) *f.* **Ai** function or psychosis of the internal organ, i. e. the mind अन्तःकरणवृत्तौ च व्यर्था बाह्यार्थकल्पना। तस्मादनुपकारो वा ग्राह्यं वा न तथा स्थितम् VākyaPa. 3 (14). 91; अन्तःकरणवृत्तौ ... प्रयोगो धर्मशब्दस्य न दृष्टः ŚlokaVār. 2. 195 (105. 5); अन्तःकरणवृत्तिवासना-विशेषपुद्गलनृगुणापूर्वेषु ...धर्मशब्दप्रयोगाभावात् TātpaṬ. (U.) 94. 14 (*on* 2. 195); संकल्पोऽपि ...अन्तःकरणवृत्तिः ChāndoUBh. 425. 7 (*on* vii.4. 1); अन्तःकरणवृत्तिर्या संस्कारपरिशेषिणी। सा स्वप्न इति विज्ञेया LakṣmīT. 22. 24; 24. 28; (सुषुप्तिः) अन्तःकरणवृत्तीनां लयतो विषयस्य तु। पूर्वार्णानां विलोमेन भ्रूमध्ये बिन्दुसंस्थिता NityāṢoḍa. 8. 187; Kāśi. i. 160. 24 (*on* 2. 195. 196); न चान्तःकरणवृत्तावप्यस्य साक्षात्कारे सर्वोपाधिविनिर्मोकः Bhām. 42. 9 (*on* i. 1. 1); ज्ञानम् ...अन्तःकरणवृत्त्य-भिव्यक्तः चित्प्रकाशः PrakaVi. 90. 13; ŚatDū. 181. 29; प्रथमं दोषकलुषितेन चक्षुषेदन्तामात्रविषयान्तःकरणवृत्तिरुत्पद्यते SarvaDaSaṁ. 16. 635; 16. 643; प्रथमं दोषसहितेनेन्द्रियेणेदन्तामात्रविषया अन्तःकरणवृत्तिर्जन्यते VivaPraSaṁ. 42. 14; 24. 20; 311. 2; साक्षी ...अन्तःकरणवृत्तीनां याथार्थ्यं स्वयमेव गृह्णाति NyāySu. (Ja.) 48A. 13 (*on* i. 1. 1); अन्तःकरणवृत्तौ कूटस्थस्यैव प्रतिफलनं जीव इति प्रसिद्धिः ŚaṅkaVi. (Ā.) 148. 1; 148. 19; विषयगतचैतन्यावरणभङ्गार्था चान्तःकरणवृत्तिः SiddhāBi. 59. 3; 147. 4; अधिष्ठानांशे अन्तःकरणवृत्तिः, अध्यस्तांशे चाविद्यावृत्तिः AdvaiSi. 652. 1; 652. 5; अन्तःकरणवृत्त्यभिव्यक्तस्यानवच्छिन्नचैतन्यस्याधिष्ठानत्वे न काचिदनुपपत्तिः SiddhāLeSaṁ. 294. 3; भागासिद्धेः, योगिनोऽन्तःकरणवृत्तेरपि तेषु निस्सरणे मानाभावात् GuruCandr. i. 121. 19; अन्तःकरणं चित्तादात्म्येनाध्यस्तं चिद्रूपम्। तस्यादृष्टेन्द्रियार्थसंनिकर्षादिनोत्पद्यमानः परिणामोऽपि ... अन्तःकरणवृत्तिरिति गीयते SiddhāTa. 6.16; इन्द्रियजन्यज्ञानं चान्तःकरणवृत्तिः VedāntPari. 318. 1; अव्यक्तं माया। तस्याश्च लयो नाम ,.. सुषुप्तावन्तःकरणवृत्तीनामिव मायावृत्ती-नामनुदयादत्यन्तनिर्विकल्पात्मनः LalitāSaBh. 104. 16 (*on* 137); अन्तःकरणवृत्तीनां यावान्विषयस्तस्य सर्वस्यापि लयो हि सुषुप्तिकाले सकले विलीन इत्यादि श्रुतिषु सिद्धः SetuBa. 342. 4; **Aii** function or psychosis of the internal organ, considered three fold as mind, intellect and ego बाह्यार्थारितसृभिः सार्धमन्तःकरण-वृत्तिभिः पाशविश्लेषवद्भूत्वा देवतास्वधिरोपयेत् MṛgendraT. ii. 8. 143; **Aiii** function or psychosis of the internal organ, i. e. the intellect प्रज्ञानरूपस्य ब्रह्मण उपलब्ध्यर्था या अन्तःकरणवृत्तयो बाह्यान्तर्वर्तिविषयविषयाः, ता इमा उच्यन्ते-संज्ञानम् ...स्मृतिः ... इत्येवमाद्या अन्तःकरणवृत्तयः AitUBh. 290. 9 (*on* 5. 2); निश्चयात्मिकाः सविकल्पनामकाः अन्तःकरणवृत्तयो धियः LalitāTriBh. 340. 15 (*on* 51); अन्तःकरणवृत्तिर्या चक्षुरादिसमाश्रया। रूपादिविषयाभासा लौकिकी दृष्टिरुच्यते BṛĀraUBhVā. iii. 4. 149 (comm. बुद्धिपरिणामः); यदपि सांख्या आचख्युर्विषयान्तरव्यासक्तेऽन्तःकरणे चक्षुरादिसंबन्धस्याप्यज्ञानादन्तःकरणवृत्तिर्ज्ञानमिति तन्निराकरणपरं भाष्यम् TātpaṬ. (Vā.) 539. 5 (*on* iii. 2. 8); बुद्धिर्नाम निश्चयात्मिका-न्तःकरणवृत्तिः VedāntSā. (Sa.) 10. 9; **B** modification of the internal organ, i.e. the Intellect घटसृष्टिवदन्तःकरणातिरिक्ताखिलसृष्टेरन्तःकरणवृत्तिपूर्वकत्वानुमानम् SāṁkhyaPraBh. 77. 10 (*on* 2. 10); **C** effect, i. e. thought produced by the mind विकल्पेभ्यो लुठन्त्येताश्चान्तःकरणवृत्तयः YogVā. i.30. 4; **D** mental disposition किमिदमस्मत्समीकसंकटावधारणेनार्द्रत्वमन्तःकरणवृत्तेः UdaySuKa. 90. 3; **E** activity of the mind, mental activity यागानुष्ठाय्येव ह्यपूर्वान्तःकरणवृत्त्या-दिकमप्यनुतिष्ठति NyāyRa. 104. 14 (*on* 2. 192); **F** state or condition of the mind, cf. **अन्तःकरणवृत्तिविशेषB.**

**अन्तःकरणवृत्ति** (antaḥkaraṇa-vṛtti) *adj.* being or abiding in the mind मैत्रगतानामपि चैत्रेण ग्रहणप्रसङ्गाद(?द्) अन्तःकरणवृत्तीनां च गुणान्तराणां नित्याप्रत्यक्ष-त्वादात्माश्रिता एवेच्छादयो नान्तःकरणाश्रयाः TātpaṬ. (Vā.) 569. 7 (*on* iii. 2.35)

**अन्तःकरणवृत्तिजनक** (antaḥkaraṇavṛtti-janaka) *adj.* producer of the function or psychosis of the internal organ तत्रान्तःकरणवृत्तिजनकसामग्रीसंभवेऽपि प्रमात्वाभावावरोधेनान्तःकरणस्यासामर्थ्यात् SiddhāBi. 124. 6.

**अन्तःकरणवृत्तिज्ञान** (antaḥkaraṇavṛtti-jñāna) *n.* knowledge of the function or psychosis of the internal organ सुषुप्तावविद्यावृत्तिभिरतिसूक्ष्माभिर-नुभूयमानमपि स्वरूपसुखं तदानीं सविकल्पकेनान्तःकरणवृत्तिज्ञानेन ग्रहीतुमशक्यम् JīvanVi. 115. 5; साक्षी तद्वदेवाज्ञानमपि साधयत्येव न तु निवर्तयति। तन्निवर्तकं त्वन्तःकरणवृत्तिज्ञानमेव VivaPraSaṁ. 20. 5.

**अन्तःकरणवृत्तिता** (antaḥkaraṇavṛtti-tā) *f.* the state of being the function or psychosis of the internal organ क्लेशकर्म तद्वासनानामन्तःकरणवृत्तितया सत्यन्तःकरणे भावात् TattvVai. 80. 19 (*on* 2. 17)

**अन्तःकरणवृत्तित्रय** (antaḥkaraṇavṛtti-traya) *n.* triad of functions of the internal organ considered threefold as mind, intellect and ego रजःसत्त्वतमोरूपाणि अहंकारबुद्धिमनांसि अन्तःकरणवृत्तित्रयम् NityoNi. 7. 6.

**अन्तःकरणवृत्तित्व** (antaḥkaraṇavṛtti-tva) *n.* **Ai** the state of being the activity of the internal organ क्षेत्रज्ञगतधर्माधर्मसहायवैचित्र्याद्वैचित्र्यम् (प्रपञ्चस्य) इति चेत्। न। अन्तःकरणवृत्तित्वाद् धर्माधर्मयोः ŚāstrDī. 114. 3 (*on* i. 1. 5); 114. 10 (*on* i. 1. 5); **Aii** the state of being the function or psychosis of the internal organ मायावादिमते अधिष्ठानज्ञानस्यान्तःकरणवृत्तित्वेन सत्यत्वान्न दोषजन्यत्वम् NyāySu. (Ja.) 55B. 9 (*on* i. 1. 1); **B** the state of being what exists in the internal organ न चात्मनः परिस्पन्दलक्षणा क्रियोपपद्यते। ...नापि प्रयत्नलक्षणा।

तस्याः अन्तःकरणवृत्तित्वात् NyāySu. (Ja.) 317B. 13 (*on* ii.2.1)

**अन्तःकरणवृत्तित्वाविशेष** (antaḥkaraṇavṛttitvāviśeṣa) *m.* non-difference from the state of being the function or psychosis of the internal organ न च (घटज्ञानस्य) अन्तःकरणवृत्तित्वाविशेषादिच्छाद्वेषादिरूपवृत्तयोऽपि देहान्निर्गत्य विषयसंसृष्टा भवन्तीति कथं न स्वीक्रियते इति वाच्यम् AdvaiSi. 482. 18.

**अन्तःकरणवृत्तिद्वार्** (antaḥkaraṇavṛtti-dvār) *f.* [Inst.] through the function or psychosis of the internal organ नन्वेकस्या एव संविदः अन्तःकरणवृत्तिद्वारा विषयसंबन्धः कादाचित्कः ŚrutaPra. iA. 139. 20 (*on* i. 1. 1)

**अन्तःकरणवृत्तिधर्म** (antaḥkaraṇavṛtti-dharma) *m.* attribute of the function or psychosis of the internal organ चैतन्यधर्म एवापरोक्ष्यं, न त्वनुमितित्वादिवत् अन्तःकरणवृत्तिधर्मः SiddhāLeSaṁ. 403. 3.

**अन्तःकरणवृत्तिनिवन्धन** (antaḥkaraṇavṛtti-nibandhana) *adj.* caused by the function or psychosis of the internal organ न चाभेदे लक्ष्यलक्षणभावायोगः अन्तःकरणवृत्तिनिवन्धनाकारभेदेन उभयोपपत्तेः AdvaiSi. 677. 2.

**अन्तःकरणवृत्तिनिर्गमन** (antaḥkaraṇavṛtti-nirgamana) *n.* act of reaching out of function or psychosis of the internal organ वह्न्यंशे त्वन्तःकरणवृत्तिनिर्गमनाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमाणचे(?चै)तना(?न्य)स्य च परस्परं भेदात् VedāntPari. 56. 3.

**अन्तःकरणवृत्तिपरंपरा** (antaḥkaraṇavṛtti-paramparā) *f.* series of the function or psychosis of the internal organ अन्तःकरणवृत्तिपरंपरायामनुप्रविष्टा चित्ततद्रूपैव भासते SetuBa. 344. 15.

**अन्तःकरणवृत्तिपूर्वकत्व** (antaḥkaraṇavṛttipūrvaka-tva) *n.* the state of being preceded by the function or psychosis of the internal organ घटसृष्टिवदन्तःकरणातिरिक्ताखिलसृष्टेरन्तःकरणवृत्तिपूर्वकत्वानुमानम् SāṁkhyaPraBh. 77. 10 (*on* 2. 10)

**अन्तःकरणवृत्तिप्रकाश** (antaḥkaraṇavṛtti-prakāśa) *m.* illumination (in the form) of the function or psychosis of the internal organ (स्वेन भासा ... अयं पुरुषः स्वयं ज्योतिर्भवति) स्वेन आत्मीयेन, भासा ... सर्ववासनात्मकेन अन्तःकरणवृत्तिप्रकाशेनेत्यर्थः – सा हि तत्र विषयभूता सर्ववासनामयी प्रकाशते BṛĀraUBh. 546. 4 (*on* iv. 3. 9)

**अन्तःकरणवृत्तिप्रतिविम्बित** (antaḥkaraṇavṛtti-pratibimbita) *adj.* reflected on the function or psychosis of the internal organ सिद्धान्तेऽप्यन्तःकरणवृत्तिप्रतिबिम्बितचैतन्यस्य ...तदाश्रितत्वात् विशेषगुणत्वव्यवहारे न काचित् क्षतिः VedāntKa. 469. 1 (*on* iii. 3. 53); नन्वन्तःकरणवृत्तिप्रतिबिम्बितस्सप्रमा Nyāyāmṛ. 73B. 7.

**अन्तःकरणवृत्तिभेद** (antaḥkaraṇavṛtti-bheda) *m.* **A** diversity or difference of the function or psychosis of the internal organ यत् चक्षुषा न पश्यति ...येन चक्षूंषि अन्तःकरणवृत्तिभेदभिन्नश्चक्षुर्वृत्तीः पश्यति KenUBh. 39. 7 (*on* 1. 7); अन्तःकरणवृत्तिभेदेनैकस्यापि लक्ष्यलक्षणभाव इत्यस्य च पूर्वमुक्तत्वात् LaCandr. 688. 28; पर्वतो वह्निमानित्यादौ पर्वतांशे वह्न्यंशे चान्तःकरणवृत्तिभेदाङ्गीकारेण ...न कश्चिद् विरोधः VedāntPari. 62. 1; **B** kind or variety of the function or psychosis of the internal organ अविद्यानिवृत्तिस्तु ...अन्तःकरणवृत्तिभेदात् साक्षात्कारादिति द्रष्टव्यम् Bhām. 58. 21 (*on* i. 1. 1); 68. 11 (*on* i. 1. 2); ब्रह्मसाक्षात्कारश्चान्तःकरणवृत्तिभेदः Bhām. 114. 14 (*on* i. 1. 4); अन्तःकरणवृत्तिभेदविषया सा श्रुतिः ŚrutaPra. iB. 168. 17 (*on* i. 1. 4)

**अन्तःकरणवृत्तियुक्त** (antaḥkaraṇavṛtti-yukta) *adj.* possessing the function or psychosis of the internal organ अन्तःकरणवृत्तियुक्ता रूपादयः चैतन्यस्य विषया भवन्ति PrakaVi. 616. 24.

**अन्तःकरणवृत्तिरूप** (antaḥkaraṇavṛtti-rūpa) *adj.* [*f.* - ā] **A** of the form of activity of the internal organ, i. e. the intellect अन्तःकरणवृत्तिरूपज्ञानक्रियाकर्तृत्वं अविक्रिये ज्ञानेऽध्यस्तम् NītiMā. 49. 22; **B** of the form of the function or psychosis of the internal organ अस्ति तावत्संसारे प्रचुरोऽयमन्तःकरणवृत्तिरूपः कामः NyāySu. (Ja.) 325A. 3 (*on* ii. 2. 1); अन्तःकरणवृत्तिरूपज्ञानवत्तद्वृत्तिरूपसुखाभावे अहं सुखीत्यनुभवायोगात् Nyāyāmṛ. 75A. 6; यद्यपि ईश्वरे यागायागसमुदायक्रियया जीववदन्तःकरणवृत्तिरूपा प्रीतिर्नोत्पद्यते, अन्तःकरणाभावात् VīraMi. (Pūjā.) 1.10.

**अन्तःकरणवृत्तिरूपत्व** (antaḥkaraṇavṛttirūpa-tva) *n.* the state of being of the form of the function or psychosis of the internal organ अथ प्रमाणज्ञानं न चैतन्यम् अपि त्वन्तःकरणवृत्तिरूपत्वाज्जडरूपमिति चेत्, तर्ह्यन्तःकरणवत्तस्मादपि विषयोपलब्धिर्न स्यात् NītiMā. 15. 3.

**अन्तःकरणवृत्तिलक्षण** (antaḥkaraṇavṛtti-lakṣaṇa) *adj.* characteristic of the function or psychosis of the internal organ अन्तःकरणवृत्तिलक्षणज्ञानद्वयानङ्गीकारात् TattvPradī. (Ci.) 84. 6; जडेऽज्ञानानभ्युपगमेनान्तःकरणवृत्तिलक्षणप्रमाणज्ञानानां तथाविधवस्तुपूर्वकत्वाभावेऽपि हेतोस्तत्र सद्भावादनैकान्तिकत्वात् Vāda. 24. 6.

**अन्तःकरणवृत्तिविशिष्ट** (antaḥkaraṇavṛtti-viśiṣṭa) *adj.* characterised by the function or psychosis of the internal organ अभ्युपेयते हि अनुभूतिशब्दवाच्यस्यान्तःकरणवृत्तिविशिष्टस्य ज्ञानस्य ज्ञानगोचरता TattvPradī. (Ci.) 8. 7.

**अन्तःकरणवृत्तिविशेष** (antaḥkaraṇavṛtti-viśeṣa) *m.* **A** particular function or psychosis of the internal organ आनन्द इति परं ब्रह्म, तद्धि ... अन्तःकरणवृत्तिविशेषे तमसा अप्रच्छाद्यमाने प्रसन्ने अभिव्यज्यते TaiUBh. 252. 4 (*on* 2. 5); अन्तःकरणवृत्तिविशेषाश्रितवासनात्मकविशेषविज्ञानेन सर्वो लोकः एतस्मिन्काले सविज्ञानो भवति BṛĀraUBh. 605. 18 (*on* iv. 4. 2); अन्तःकरणवृत्तिविशेषे प्रसन्ने सति ...आत्मैवानन्दः प्रकटीभवति IṣṭaSi. 28. 10; 30. 15; सामग्रीसंपत्तिदशायामुत्पत्स्यमानान्तःकरणवृत्तिविशेषमेव सहकारित्वेनापेक्ष्य ब्रह्मैव निवर्तकम् ŚatDū. 181. 29; भावोऽन्तःकरणवृत्तिविशेषः SetuBa. 275. 10; **B** particular state or condition of the mind द्वाविमौ संयोगवियोगाख्यावन्तःकरणवृत्तिविशेषौ RasGaṅ. 41. 7.

**अन्तःकरणवृत्तिवेद्यत्व** (antaḥkaraṇavṛttivedya-tva) *n.* the state of being what is to be known through the function or psychosis of the internal organ एवं घटादिवद् वृत्तिवेद्यत्वेऽज्ञानान्तःकरणरजतादीनामपि अन्तःकरणवृत्तिवेद्यत्वमेवास्तु SiddhāTa. 9. 5.

**अन्तःकरणवृत्तिव्यक्त** (antaḥkaraṇavṛtti-vyakta) *adj.* manifested by the function or psychosis of the internal organ अन्तःकरणवृत्तिव्यक्तचित्प्रकाशमन्तरेण विषये पृथक् प्राकट्यानङ्गीकारात् VivaPraSaṁ. 24. 20.

**अन्तःकरणवृत्तिव्याप्य** (antaḥkaraṇavṛtti-vyāpya) *adj.* pervaded by the function or psychosis of the internal organ अन्तःकरणवृत्तिव्याप्ये ब्रह्मणि वाग्वृत्तेरपि सर्वथा निषेधायोगः AdvaiSi. 785. 5.

**अन्तःकरणवृत्तिसंयुक्त** (antaḥkaraṇavṛtti-saṁyukta) *adj.* associated with the function or psychosis of the internal organ यच्चक्षुषा न पश्यति न विषयीकरोति अन्तःकरणवृत्तिसंयुक्तेन लोकः KenUBh. 39. 6 (*on* 1. 7)

**अन्तःकरणवृत्तिसंसर्ग** (antaḥkaraṇavṛtti-saṁsarga) *m.* relation of the function or psychosis of the internal organ अन्तःकरणवृत्तिसंसर्गमनपेक्ष्य तेन प्रकाशनस्य चायोगात् SiddhāLeSaṁ. 293. 2.

**अन्तःकरणवृत्तिसाक्षिता** (antaḥkaraṇavṛttisākṣi-tā) *f.* the state of being a witness of the function or psychosis of the internal organ समस्तनामरूपकर्मातिदूरतया सर्वकामाद्यन्तःकरणवृत्तिसाक्षितया तदालम्बनशून्यतया च निरालम्बयोगः TripāMaNāU. 328. 7 (8)

**अन्तःकरणवृत्त्यंश** (antaḥkaraṇavṛtty-aṁśa) *m.* aspect or element of the function or psychosis of the internal organ अन्तःकरणवृत्त्यंशस्य चाज्ञानत्वात् VivaPraSaṁ. 53. 22.

**अन्तःकरणवृत्त्यवच्छिन्न** (antaḥkaraṇavṛtty-avacchinna) *adj.* delimited by the function or psychosis of the internal organ अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं तु प्रमाणम् AdvaiSi. 489. 4; अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम् VedāntPari. 44. 5; YatīndraDī. 15. 4.

**अन्तःकरणवृत्त्याश्रय** (antaḥkaraṇavṛtty-āśraya) *adj.* resorting to the function or psychosis of the internal organ असुप्तः स्वयम् ... अन्तःकरणवृत्त्याश्रयान् बाह्याध्यात्मिकान् सर्वानेव भावान् ... अभिचाकशीति BṛĀraUBh. 549. 18 (*on* 3. 11)

**अन्तःकरणवृत्त्याश्रय** (antaḥkaraṇavṛtty-āśraya) *m.* abode of the function or psychosis of the internal organ जानामीति चानुभवस्यान्तःकरणवृत्त्याश्रयप्रमातृविषयतयाप्युपपत्तेः TattvPradī. (Ci.) 24. 11.

**अन्तःकरणवृत्त्युपधान** (antaḥkaraṇavṛtty-upadhāna) *n.* condition or adjunct existing in the function or psychosis of the internal organ ज्ञानत्वानन्दत्वाभ्यामन्यन्तःकरणवृत्त्युपधानलब्धभेदचिदानन्दविशेषानुगताभ्यां लक्ष्यमाणचिदानन्दव्यक्त्योरपि योज्यम् VedāntKa. 55. 25 (*on* i. 1. 2); ज्ञानानन्दपदयोरपि ... अन्तःकरणवृत्त्युपधानलब्धभेदचिदानन्दविशेषानुगते ज्ञानत्वानन्दत्वे AdvaiSi. 691. 33.

**अन्तःकरणवृत्त्युपाधि** (antaḥkaraṇavṛtty-upādhi) *m.* condition or adjunct existing in the function or psychosis of the internal organ यद्यपि एते (धर्माः) स्वरूपभूता एवात्मनः, तथाप्यन्तःकरणवृत्त्युपाधौ नानेवावभासन्त इति तेषां धर्मत्वमुपचर्यते VivaPraSaṁ. 14. 20; उक्ततादात्म्याकारवृत्तिद्वारकशुद्धब्रह्माकारवृत्तिर्निर्देश्या। ...अन्तःकरणवृत्त्युपाधौ भिन्ना इवेति LaCandr. 156. 28.

**अन्तःकरणवृत्त्युपारूढ** (antaḥkaraṇavṛtty-upārūḍha) *adj.* associated with the function or psychosis of the internal organ केवलजीवचैतन्याप्रकाश्यस्यापि

घटादेरन्तःकरणवृत्त्युपारूढतत्प्रकाश्यत्वं युक्तम् SiddhāLeSaṁ. 126. 3.

**अन्तःकरणवेदन** (antaḥkaraṇa-vedana) *n.* comprehension of (disposition of) the internal organ, i.e. the mind सुव्यक्तमात्रासंबोधमुग्धत्वेन विहीयते। तत्त्ववित्कारणज्ञानादन्तःकरणवेदनम् RājTa. (Ka.) 8. 3054.

**अन्तःकरणवैविध्य** (antaḥkaraṇa-vaividhya) *n.* diversity of the internal organ, i.e. the mind मन एकमेव अन्तःकरणम्, संकल्पाध्यवसायादयस्तद्व्यापारभेदादेव जायन्ते इति नान्तःकरणवैविध्यम् NyāySiA. 194. 11.

**अन्तःकरणव्यवस्थानुमान** (antaḥkaraṇavyavasthānumāna) *n.* inference regarding the establishment of the internal organ, i.e. the mind कर्मबुद्धीन्द्रियासंभविन्या संकल्पादिक्रियाव्यवस्थयान्तःकरणव्यवस्थानुमानम् Bhām. 510. 6 (*on* ii. 4. 6)

**अन्तःकरणव्यापार** (antaḥkaraṇa-vyāpāra) *m.* operation of the internal organ शमो नाम अन्तःकरणव्यापाराणाम् ...निष्फलत्वावधारणपूर्वकः परित्यागः PrakaVi. 28. 19.

**अन्तःकरणव्यापारदशा** (antaḥkaraṇavyāpāra-daśā) *f.* stage or condition of the operation of the internal organ जीववर्गस्य चक्षुःश्रोत्रान्तःकरणव्यापारदशासु परमेश्वरस्यानवभासमानतोक्त्या तस्य प्रत्यक्षादिप्रमाणातीतत्वं लब्धम् ŚivārkaMaDī. i. 425. 6 (*on* i. 3. 12)

**अन्तःकरणशक्ति** (antaḥkaraṇa-śakti) *f.* faculty or power of the internal organ, i. e. the intellect ताभिः संपूर्णमन्तःकरणशक्तिभिः। ...ध्यायेत् PauṣkS. 27. 289.

**अन्तःकरणशबलता** (antaḥkaraṇaśabala-tā) *f.* the state of being mixed with or conditioned by the internal organ, i. e. the intellect ब्रह्माज्ञानपक्षेऽपि ज्ञानाश्रयत्वस्य ब्रह्मणोऽन्तःकरणशबलताद्वारत्वादनाद्यज्ञानसंबन्धोऽपि ब्रह्मणोऽज्ञानसंबन्धद्वारक एव PañcPra. 57. 4.

**अन्तःकरणशरण** (antaḥkaraṇa-śaraṇa) *adj.* which has mind (of a sage) as the refuge or abode मुनीन्द्राणामन्तःकरणशरणौ ...कामाक्ष्या दुरितहरणौ नौमि चरणौ MūkaPañ. 3. 73.

**अन्तःकरणशरण** (antaḥkaraṇa-śaraṇa) *n.* refuge or abode of the mind गतवति वितताघुःकर्मणि प्रान्तमन्तःकरणशरणवैरिध्वंसनादत्तकीर्तिः KathāK. 85. 26.

**अन्तःकरणशल्य** (antaḥkaraṇa-śalya) *n.* dart in the heart, i. e. cause of heart-rending grief अमराः ...आखण्डलनरोपशल्यमन्तःकरणशल्यमालोकयन्तः ... तपोलोकसमीपमापेदिरे NīlaVi. 36. 15.

**अन्तःकरणशारीरपरता** (antaḥkaraṇaśārīrapara-tā) *f.* the state of being intended to convey the internal organ and the embodied individual soul सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणशारीरपरतया प्रसिद्धत्वात् BrahmSūBh. (Śaṅ.) 110. 16 (*on* i. 2. 12)

**अन्तःकरणशुद्ध** (antaḥkaraṇa-śuddha) *adj.* (used as noun) (one) whose mind is pure अन्तःकरणशुद्धाये(?ने)तान् विभूतिः पवित्रयेत् SkandP. iv. 35. 141.

**अन्तःकरणशुद्धात्मतत्त्व** (antaḥkaraṇaśuddhātmatattva) *adj.* whose essence of the soul is purified through the internal organ (गुरुः) अन्तःकरणशुद्धात्मतत्त्वः ...शिष्यं शिवीभूतं ध्यात्वा तस्मै शिवविषयान् षड्गुणानापादयेत् ĪśānŚiPa. ii. 18. 120 (7)

**अन्तःकरणशुद्धि** (antaḥkaraṇa-śuddhi) *f.* A purification of the mind मनुः ...कर्मणः अन्तःकरणशुद्धावेव विनियोगं दर्शितवान् SanatBh. 186. 3 (*on* 1. 6); जटातीर्थे ...स्नातानाम् ...। अन्तःकरणशुद्धिः स्यात्ततोऽज्ञानं विनश्यति SkandP. iii (1). 20. 12; न ह्यन्तःकरणस्याहृष्टवशादन्तःकरणशुद्धिरित्यत्र प्रमाणमस्ति ŚrutaPra. iA. 163. 29 (*on* i. 1. 1); जन्मान्तरानुष्ठितैरपि कर्मभिरन्तःकरणशुद्धौ ज्ञानोदयसंभवात् VivaPraSaṁ. 207. 13; जपादिभिरन्तःकरणशुद्धौ सत्यां विद्योदयः VedāntKau. 373. 19 (*on* iii. 4. 37); मोक्षार्थं सर्वथा ज्ञानमपेक्षितं तच्च कर्मादिनान्तःकरणशुद्ध्या भवति TattvPrakā. 74B. 9 (*on* i. 5. 23); B purity of the mind अन्तःकरणशुद्धिर्या शुचिता सा प्रकीर्तिता RasāSu. 12. 4 (1. 69); तदर्थाया अन्तःकरणशुद्धेरपेक्षितत्वात् Nyāyāmṛ. 618B. 2; AdvaiSi. 865. 3; सत्त्वशुद्धिरन्तःकरणशुद्धिः ŚivārkaMaDī. ii. 401. 34 (*on* iii. 4. 29); तत्रान्तःकरणशुद्धिर्द्वारम् SiddhāTa 27. 5; भावशुद्धिरन्तःकरणशुद्धिः VīraMi. (Āhnika.) 43. 1; एवं सतीति। अन्तःकरणशुद्धौ सत्यामित्यर्थः BālamBha. iii. 102. 13 (*on* 3. 62)

**अन्तःकरणशुद्धिकृत्** (antaḥkaraṇaśuddhi-kṛt) *adj.* which causes the purity of the mind मरणवचनानां त्वन्तःकरणशुद्धिप्रतिपादनमात्रपरता पृथूदकादौ यन्मरणं तदप्यत्यन्तशुद्धिकृत् TristhaSe. 365. 11.

**अन्तःकरणशुद्धिद्वार्** (antaḥkaraṇaśuddhi-dvār) *f.* [Inst.] A through the purification of the mind (कर्मणः) यदि साक्षात्करणत्वं न संभवेत्, तदा अन्तःकरणशुद्धिद्वारा तत्कल्पनीयम् VivaPraSaṁ. 207. 1; ब्रह्मविद्यार्थिनो यद्यपि कर्मभिरन्तःकरणशुद्धिद्वारा विद्या स्यात् VedāntKau. 368. 23 (*on* iii. 4. 27) ... कर्मणामप्यन्तःकरणशुद्धिद्वारा ब्रह्मसाक्षात्कारोपयोगितया मुक्तिफलकत्वसंभवात् ŚivārkaMaDī. i. 575. 27 (*on* i. 4. 29); काशीमरणेनान्तःकरणशुद्धिद्वारा तत्त्वज्ञानमुत्पद्यत इति न युक्तम् VīraMi. (Tīrtha.) 317. 18; B through the purity of the mind अन्तःकरणशुद्धिद्वारा क्रममुक्तिश्च SiddhāBi. 140. 6; 81. 2; सर्वानपि विधीनन्तःकरणशुद्धिद्वारा स्वशेषतामापादयत् PrasthāBhe. 6. 5; ब्रह्मचारिणाम् ...अन्तःकरणशुद्धिद्वारा विविदिषादिसिद्धिः SiddhāTa. 30. 9.

**अन्तःकरणशुद्धिद्वार** (antaḥkaraṇaśuddhi-dvāra) *n.* [Inst.] A through the purification of the mind कर्मणां त्वन्तःकरणशुद्धिद्वारेण मोक्षहेतुत्वम् ViṣṇuSaBh. 128. 3 (*on* 123); कर्मणां त्वन्तःकरणशुद्धिद्वारेण ज्ञानाङ्गत्वोपपत्तेः NyāySu. (Ja.) 17B. 4 (*on* i. 1. 1); B through the purity of the mind सगुणब्रह्मोपासनविधायकानां वेदान्तानाम् ... तेषामप्यन्तःकरणशुद्धिद्वारेण तत्रैव पर्यवसानात् VivaPraSaṁ. 131. 12.

**अन्तःकरणशुद्धिमत्** (antaḥkaraṇaśuddhi-ma(n)t) *adj.* (used as noun) (one) having purity of the mind वेदबाह्यत्वेऽप्यन्तःकरणशुद्धिमतां रक्षणार्थम् ... शिवकेशवाभ्यां पाशुपतपाञ्चरात्रादीनि निर्मितानि ŚivārkaMaDī. ii. 117. 14 (*on* ii. 2. 42)

**अन्तःकरणशुद्धिरूप** (antaḥkaraṇaśuddhi-rūpa) *adj.* of the nature of purity of the mind पुरुषगतो विशेषः अन्तःकरणशुद्धिरूपः प्रतिबन्धाभावः AdvaiSi. 739. 17.

**अन्तःकरणशुद्धिहेतुत्व** (antaḥkaraṇaśuddhihetu-tva) *n.* the state of being the cause of the purification of the mind कथं कर्मणां तत्तत्फलसाधनानामन्तःकरणशुद्धिहेतुत्वम् SiddhāTa. 25. 17

**अन्तःकरणशुद्ध्यर्थ** (antaḥkaraṇaśuddhy-artha) *adj.* having the purification of the mind as its purpose 'दर्वीहोमेन ...भवति' इत्यादिश्रुतेरन्तःकरणशुद्ध्यर्थानां कर्मणां वैयर्थ्ये तत्प्रतिपादकश्रुतीनां व्याकोपः TristhaSe. 295. 28.

**अन्तःकरणशुद्ध्यर्थम्** (antaḥkaraṇaśuddhyartham) *adv.* for the sake of the purification of the mind तदपि सम्यग्दर्शनवतामपि प्रत्यहमन्तःकरणशुद्ध्यर्थमग्निहोत्रादेरनुवर्तनीयतायाः ...अनुपपन्नम् ŚrutaPra. ii. 589. 27 (*on* iv. 1. 18); अन्तःकरणशुद्ध्यर्थं कर्मणां विनियोग इति चेत् ŚatDū. 65. 3; अन्तःकरणशुद्ध्यर्थं पञ्चरात्रानुसारतः। श्रुतिस्मृत्युदितं धर्मम् ...। संसेवते BṛBrahmaS. i. 7. 29.

**अन्तःकरणशुद्ध्यादि** (antaḥkaraṇaśuddhy-ādi) *adj.* A purity etc. of the mind उक्तरीत्या दासमार्गप्रपदनमात्रस्य ...दासबुद्ध्या तत्त्वीकरणस्य वा अन्तःकरणशुद्ध्यादिद्वारमनपेक्ष्य मोक्षसाधनत्वायोगात् PūrvottaVāNaMā. 173. 7; B purification etc. of the mind मरणस्य सम्यगन्तःकरणशुद्ध्यादिक्रमेण ज्ञानजनकताङ्गीकारात् TristhaSe. 295. 24.

**अन्तःकरणशुद्ध्युत्कर्ष** (antaḥkaraṇaśuddhy-utkarṣa) *m.* excess of the purity of the mind अन्तःकरणशुद्ध्युत्कर्षादेवानन्दोत्कर्षः IṣṭaSi. 28. 22.

**अन्तःकरणशोधकता** (antaḥkaraṇaśodhaka-tā) *f.* the state of being the purifier of the mind न च प्राणवियोगात्मकस्य मरणस्य क्वचिदन्तःकरणशोधकता श्रुता दृष्टा चेत्यलौकिकम् TristhaSe. 306. 7.

**अन्तःकरणशोधकत्व** (antaḥkaraṇaśodhaka-tva) *n.* the state of being the purifier of the mind तस्माद्युक्तमुक्तं कर्मणामन्तःकरणशोधकत्वम् SiddhāTa. 26. 27; तादृशानुष्ठानस्यान्तःकरणशोधकत्वमुक्तं सांप्रदायिकैः VīraMi. (Bhakti.) 122. 31; 66. 1.

**अन्तःकरणशोधन** (antaḥkaraṇa-śodhana) *n.* purification of the mind उपायस्ते कर्मात्मा ...। संज्ञानं जनयेच्छुद्धमन्तःकरणशोधनात्। ...ददामि बुद्धियोगं तमन्तःकरणशोधनम्। सांख्यं नाम द्वितीयो य उपायः कथितस्तव LakṣmīT. 16. 35.

**अन्तःकरणश्री** (antaḥkaraṇaśrī) *f.* name of a particular mystic formula, viz. *bam pham pam prīm* अन्तःकरणश्रीर्मायाव्योमेशकृतशेखरा LakṣmīT. 44. 30.

**अन्तःकरणसंयम** (antaḥkaraṇa-saṁyama) *m.* control over the mind अन्तःकरणसंयमो दमः Mitā. 41. 13 (*on* 1. 122); SmṛtiCan. i. 14. 2.

**अन्तःकरणसंयोग** (antaḥkaraṇa-saṁyoga) *m.* connection or contact with the internal organ वैशेषिकादिवदेव भोगजनकतावच्छेदकत्वेनान्तःकरणसंयोगे वैजात्यं चास्माभिरपीष्यम् SāṅkhyaPraBh. 14. 20 (*on* 1. 19)

**अन्तःकरणसंशुद्धि** (antaḥkaraṇa-saṁśuddhi) *f.* purification of the mind अन्तःकरणसंशुद्धिमचिरात्समवाप्नुयात् BṛBrahmaS. i. 6. 100.

**अन्तःकरणसंसर्ग** (antaḥkaraṇa-saṁsarga) *m.* cnnection or contact with the internal organ यदुक्तं मुक्तस्यान्तःकरणाद्यभावान्न संसारानुभवप्राप्तिरिति, तदसत्, निर्विशेषत्वादेकरसे चैतन्येऽन्तःकरणसंसर्गभावाभावयोरप्ययोगात् Vādā. 148. 1.

**अन्तःकरणसंसृति** (antaḥkaraṇa-saṁsṛti) *f.* transmigration of the in- ... शून्यं नापि चाशून्यं नान्तःकारण(v.l. °करण VIŚVA.)संसृतिः

TejoBiU. 6. 17.

**अन्तःकरणसंसृष्टत्व** (antaḥkaraṇasaṁsṛṣṭa-tva) *n.* the state of being what is associated with the internal organ ब्रह्मणोऽन्तःकरणसंसृष्टत्वेऽपि ब्रह्माकारपरिणतान्तःकरणवृत्त्यभावान्न सदा जीवस्य ब्रह्मज्ञानप्रसङ्गः VivaPraSaṁ. 91. 7.

**अन्तःकरणसंसृष्टवस्तु** (antaḥkaraṇasaṁsṛṣṭa-vastu) *n.* thing associated with the internal organ अन्तःकरणसंसृष्टवस्तुज्ञातृत्वे ब्रह्मस्वरूपमपि जीवः सर्वदा जानीयात्, सर्वगतस्य ब्रह्मणोऽन्तःकरणेऽपि संसृष्टत्वात् VivaPraSaṁ. 90. 1.

**अन्तःकरणसंस्कार** (antaḥkaraṇa-saṁskāra) *m.* (latent) impression in the internal organ शरीरान्तःकरणोपाधिद्वयरहितोऽन्तःकरणसंस्कारावच्छिन्नाविद्यामात्रोपहितः ... प्राज्ञः SiddhāBi. 92. 6.

**अन्तःकरणसंस्था** (antaḥkaraṇa-saṁsthā) *adj.* (*f.*) existing or stored in the internal organ अन्तःकरणसंस्था हि वासनाः यातयन्ति शरीरिणः LakṣmīT. 17. 52.

**अन्तःकरणसंस्थित** (antaḥkaraṇa-saṁsthita) *adj.* present in the internal organ ब्रह्मभिन्नं विभो ज्ञानं श्रोतुमिच्छामि तत्त्वतः। येन संप्राप्यते ज्ञेयमन्तःकरणसंस्थितम् JayāS. 5. 1.

**अन्तःकरणसंकल्परूप** (antaḥkaraṇasaṅkalpa-rūpa) *adj.* of the nature of resolve in the mind (नोद्यन्तमादित्यमीक्षेत) अनीक्षणं नामान्तःकरणसंकल्परूपं नियम्यते TantrRa. 31. 3.

**अन्तःकरणसंघात** (antaḥkaraṇa-saṅghāta) *m.* aggregate of the internal organs (viz. mind, vital air and speech) अन्नादीनामशितानाम् ... । अणिष्ठा धातवः मनः प्राणं वाचं देहस्यान्तःकरणसंघातमुपचिन्वन्ति ChāndoUBh. 383.8 (*on* vi. 8. 6)

**अन्तःकरणसत्ता** (antaḥkaraṇa-sattā) *f.* [Inst.] through the power of the mind (कर्कटी नाम राक्षसी ...सूचीभावं प्रपन्ना) विससार दिगन्तेषु सान्तःकरणसत्तया YogVā. iii. 70. 52.

**अन्तःकरणसत्त्व** (antaḥkaraṇa-sattva) *n.* A function of the internal organ, i. e. the Intellect यदा तु रजस्तमोलेशानुविद्धमन्तःकरणसत्त्वं भाव्यते तदा ... सुखप्रकाशमयस्य सत्त्वस्य ...सानन्दः समाधिर्भवति RājMār. 8. 7; हृदयं शरीरस्य प्रदेशविशेषस्तस्मिन्नधोमुखस्वल्पपुण्डरीकाभ्यन्तरेऽन्तःकरणसत्वस्य स्थानम् RājMār. 55. 3; **Bi** persistence of the internal organ सुषुप्तेऽपि च संस्कारात्मनान्तःकरणसत्त्वात् SiddhāTa. 13. 2; **Bii** existence of the internal organ सवृत्तिकान्तःकरणावच्छिन्नस्यैव चैतन्यस्य प्रमात्वनियमात् तदान्तःकरणसत्त्वेऽपि प्रमात्रभावः SiddhāBi. 109. 4.

**अन्तःकरणसद्भाव** (antaḥkaraṇa-sadbhāva) *m.* **i** existence of the internal organ अन्तःकरणसद्भावे प्रमाणमाह TātpaṬ. (U.) 162. 15 (*on* 4. 166); मन्त्रं तन्त्रम् ... । अन्तःकरणसद्भाव अविद्यायाश्च संशयः TejoBiU. 5. 53; **ii** continued existence or persistence of the internal organ सुषुप्तावपि सूक्ष्मरूपेणान्तःकरणसद्भावात् तदुपहितः साक्षी तदाप्यस्त्येव SiddhāLeSaṁ. 165. 3.

**अन्तःकरणसंत्याग** (antaḥkaraṇa-santyāga) *m.* abandonment, i. e. cessation of the internal organ अन्तःकरणसंत्यागादवशिष्टे चिदात्मनि। अहं ब्रह्मेति वाक्येन ब्रह्मत्वं साक्षिणीक्ष्यते PañcDa. 7. 89.

**अन्तःकरणसंनिधान** (antaḥkaraṇa-sannidhāna) *n.* proximity of the internal organ परमात्मैव ...अन्तःकरणसंनिधानात् ...अविकृतः पश्यति PañcPra. 33. 3.

**अन्तःकरणसमाधानापेक्ष** (antaḥkaraṇasamādhānāpekṣa) *adj.* dependent on the steadiness or concentration of the mind चक्षुषो दृष्टिसंनिपातः। स च अन्तःकरणसमाधानापेक्षो विवक्षितः GītāBh. (Śaṅ.) 192. 5 (*on* 6. 13)

**अन्तःकरणसंबद्ध** (antaḥkaraṇa-sambaddha) *adj.* connected with the internal organ स्वतोऽन्तःकरणसंबद्धानां धर्माधर्मादीनां ब्रह्मणश्च वृत्तिमन्तरेणैव सर्वदा भानं स्यात् SiddhāBi. 60. 1.

**अन्तःकरणसंबन्ध** (antaḥkaraṇa-sambandha) *m.* **i** connection or association with the internal organ, i. e. the intellect मायासंबन्धतश्चेशो जीवोऽविद्यावशस्तथा। अन्तःकरणसंबन्धात्प्रमातेत्यभिधीयते KaṭhRuU. 39; अन्तःकरणसंबन्धे विज्ञानमिति कर्तरि। प्रत्ययः BṛĀraUBhVā. ii. 1.185 (comm. ल्युडन्तस्य विज्ञानमितिशब्दस्यान्तःकरणेन वाचकतया संबन्धे विवक्षिते कर्तरि प्रत्ययः स्यादन्तःकरणस्य ज्ञानकर्तृत्वात्); **ii** connection or association with the internal organ, i. e. the mind यदा रूपं जिघृक्षते पुरुषस्तदा रूपं पश्यति ... न चान्तःकरणसंबन्धमन्तरेण बाह्येन्द्रियस्य विषयग्राहकत्वम् NyāyKa. 310. 1.

**अन्तःकरणसंबन्धमात्र** (antaḥkaraṇasambandha-mātra) *n.* mere connection with the internal organ, i. e. the mind सुखदुःखादौ स्वत इति नान्तःकरण-संबन्धमात्रेण भानप्रसङ्गः SiddhāBi. 61. 2.

**अन्तःकरणसंभव** (antaḥkaraṇa-sambhava) *adj.* **i** arising from the internal organ, i. e. the mind स एव भगवान् रुद्रो मोचयत्यपि सेवितः। दशेन्द्रियमयैः पाशैः अन्तःकरणसंभवैः LiṅgaP. ii. 9. 17; **ii** born of, i.e. produced from the internal organ, i. e. the intellect (by which decision is made) (चेतोऽन्तःकरणं मनः ...मारस्तत्रोद्भवो मतः) अन्तः निश्चयः क्रियतेऽनेन, अन्तःकरणम् ...अन्तःकरणसंभवः comm. *on* NāmMā. 81.

**अन्तःकरणसंभिन्न** (antaḥkaraṇa-sambhinna) *adj.* **i** connected with, i.e. delimited by the internal organ आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः। अन्तःकरणसंभिन्नबोधः स त्वंपदाभिधः VākyaVṛ. 44; AdhyāU. 31; PaiṅgU. 423. 20 (3.1); PañcDa. 7. 71; **ii** connected, i.e. associated with the internal organ, i.e. the mind अन्तःकरणसंभिन्नं पापं तस्य विनश्यति DevīBhāP. xi. 16. 44.

**अन्तःकरणसंभृत** (antaḥkaraṇa-sambhṛta) *adj.* held, i. e. cherished in the mind धर्मशास्त्रं महर्षीणामन्तःकरणसंभृतम् AhirbuS. 12.14; SītāU. 6.

**अन्तःकरणसंमित** (antaḥkaraṇa-sammita) *adj.* cognised properly by the internal organ, i. e. mind विश्वं तदेव सूक्ष्माख्यमन्तःकरणसंमितम् AhirbuS. 51. 25 (comm. चित्तेन सम्यक् प्रमितम्)

**अन्तःकरणसर्वस्वमोषण** (antaḥkaraṇasarvasva-moṣaṇa) *n.* act of stealing of the entirety of the heart अङ्गनापाङ्गपथिकाभिरन्तःकरणसर्वस्वमोषणाय प्रेष्यत्यनल्पभयोरिव ...कामपालः कामलेखमालो(च?क)यत् AvantiKa. 202. 9.

**अन्तःकरणसहकारित्व** (antaḥkaraṇasahakāri-tva) *n.* the state of being an auxiliary (cause) of the internal organ, i. e. the intellect पूर्वपूर्ववर्णसंस्काराणां तत्स्मृतीनां चान्तःकरणनिष्ठानामन्तःकरणसहकारित्वस्यैवौचित्यात् YogSā. 69. 11(4)

**अन्तःकरणसाधन** (antaḥkaraṇa-sādhana) *adj.* having the internal organ as the means or instrument यस्य पुनर्वृत्तिवृत्तिमतोर्नानात्वं तस्यान्तःकरणसाधनश्चक्षुरादिसाधनश्चात्मा अर्थानुपलभते NyāyVār. 407. 5 (*on* iii. 2. 8)

**अन्तःकरणसाध्य** (antaḥkaraṇa-sādhya) *adj.* to be accomplished through the internal organ, i. e. the intellect बोधो बुद्धिरिति भावार्थो विवक्षितश्चेत् सोऽन्तःकरणसाध्यः Kiraṇā. 258. 14.

**अन्तःकरणसामग्री** (antaḥkaraṇa-sāmagrī) *f.* A totality (of causes) comprising of the internal organ, i.e. the intellect देशनाकालल्ब्ध्यादिबाह्यकारणसंपदि। अन्तःकरणसामग्र्यां भव्यात्मा स्याद् विशुद्धकृत् (दृक्) MahāP. 9. 116; **B** totality (of causes) comprising of the internal organ, i.e. the mind (आत्मा) अन्तःकरणसामग्र्येकत्र स्पष्टीकृतः संकल्पादिदर्शनात्सर्वव्यापित्वे सति Aparā. 988. 20 (*on* 3. 110)

**अन्तःकरणसामानाधिकरण्य** (antaḥkaraṇa-sāmānādhikaraṇya) *n.* semantic co-referentiality or syntactic agreement with the internal organ, i.e. the mind अन्तःकरणसामानाधिकरण्यं तु कामादीनां 'कामः संकल्पः' इत्यादिश्रुतिसिद्धम् VivaPraSaṁ. 115. 24.

**अन्तःकरणसामान्य** (antaḥkaraṇa-sāmānya) *n.* A internal organ, i. e. ego in general अहमर्थोऽन्तःकरणसामान्यम् SāṁkhyaPraBh. 34. 10 (*on* 1. 64); **B** internal organ, i. e. the mind in general चित्तमन्तःकरणसामान्यम् YogVār. *on* 1.2.

**अन्तःकरणसाहित्य** (antaḥkaraṇa-sāhitya) *n.* association with the internal organ अन्तःकरणसाहित्यराहित्याभ्यां विशिष्यते। उपाधिर्जीवभावस्य ब्रह्मतायाश्च PañcDa. 7. 85.

**अन्तःकरणसृष्टि** (antaḥkaraṇa-sṛṣṭi) *f.* creation of the internal organ अन्तःकरणसृष्टौ बुद्ध्युपधानेन विना कर्तृत्वस्याभ्युपगन्तव्यत्वात् ŚrutaPra. ii. 374. 10 (*on* ii. 3. 39)

**अन्तःकरणस्थ** (antaḥkaraṇa-stha) *adj.* [*f.* - ā] present or existing in the internal organ, i. e. the mind विवेकाविवेकौ रूपादिवत् प्रत्यक्षावुपलभ्येते अन्तःकरणस्थौ TaiUBh. 276. 11 (*on* 2. 8); आशया हि अन्तःकरणस्थया स्मरति स्मर्तव्यम् ChāndoUBh. 447. 8 (*on* vii. 14.1); योऽयं देहे चेष्टयितान्तःकरणस्थः ... सोऽस्म्यहमेव इति ...यं विदुरीशं तम् ...हरिमीडे HariStu. 31; अन्तःकरणस्थानां कामानां मोक्षमेव हि आह श्रुतिः AnuVyā. 55A. 3 (*on* 3. 4)

**अन्तःकरणस्थित** (antaḥkaraṇa-sthita) *adj.* present or existing in the internal organ, i. e. the intellect विज्ञप्तिमात्ररूपं यन्मनमन्तःकरणस्थितम्। ...हैमनालं महाप्रभम् JayāS. 2. 35.

**अन्तःकरणस्थित्यभ्युपगम** (antaḥkaraṇasthity-abhyupagama) *m.* acceptance of the existence or persistence of the internal organ

क्रोधवत्यापि विलक्षहसितस्पृशा। प्रोचे Saundarānanda...

**अन्तःक्रोधार्चिष्मत्** (antaḥkrodhārciṣma(n)t) *m.* fire in the form of inner wrath नानावर्णास्तदैवान्तःक्रोधार्चिष्मच्छिखा इव। स्कन्धावारप्रवीराणां नेत्रपट्टा विनिर्ययुः PāṇḍaC. 12. 386.

**अन्तःक्रौर्य** (antaḥ-kraurya) *m.* inward cruelty, MW.

**अन्तःक्रौर्य** (antaḥ-kraurya) *n.* internal cruelty अन्तःक्रौर्यमहोशठस्य मधुरं हा हारि गेयं मुखे Subhāṣi. 1021.

**अन्तःक्लेद** (antaḥ-kleda) *m.* moisture from within (the earthly substances) i. e. inner moisture (of the worldly objects) स्वेदः पार्थिवानां द्रव्याणा-मग्न्यादित्यादितापसंबन्धादन्तःक्लेदः ManuBh. i. 28. 19 (*on* 1. 45)

**अन्तःक्लेशकलङ्किता** (antaḥkleśa-kalaṅkitā) *adj.* (*f.*) (permanently) marked by the inner suffering अन्तःक्लेशकलङ्किताः किल वयं यामोऽद्य याम्यां पुरीम् VidaMā. 2. 37 (comm. अन्तःक्लेशेन कलङ्किताश्चिह्निताः सत्यः। मृत्योरनन्तर-मप्ययं क्लेशः स्थास्यति)

**अन्तःक्वणत्** (antaḥ-kvaṇat) *adj.* jingling from inside अन्तःक्वणत्करज-वज्रशिखाभिघातः। किं केसरी ... तृणेन प्राणात्ययेऽपि कुरुते स्वशरीरयात्राम् Subhāṣi. 603.

**अन्तःक्वणितषट्पद** (antaḥkvaṇita-ṣaṭpada) *adj.* having a bee humming inside इदं रुणद्धि मां पद्ममन्तःक्वणितषट्पदम् Vikramo. 4. 40.

**अन्तःक्वथन** (antaḥ-kvathana) *n.* internal or inward boiling आश्लेषमन्तः-क्वथनं प्रणामं कामोपदंशानि च चुम्बनानि। दृष्ट्वाङ्गनानामसहा निसोढुं हासादिवासौ स्फुटिता प्रभासीत् RāghPāṇ. (Dha.) 17. 85 (*but* comm. अन्तःकरणपाकं यथा भवति तथा)

**अन्तःक्षत** (antaḥ-kṣata) *adj.* deeply cut or wounded inwards कंचित् ... अन्तःक्षतेन। हस्ताग्रेण प्राप्तमप्यग्रतोऽभूदानैश्वर्यं वारणस्य ग्रहीतुम् ŚiśuVa. 18. 49.

**अन्तःक्षत** (antaḥ-kṣata) *n.* name of a kind of fistulous disease (in the chest) उरस्यन्तःक्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत् AṣṭāSaṁ. ii. 24. 23 (4. 5)

**अन्तःक्षतभय** (antaḥkṣata-bhaya) *n.* fear of fistulous disease (in the chest) क्षीणादीनामौषधबलाक्षमत्वाद् देहबलोपरोधोऽन्तःक्षतभयं च AṣṭāSaṁ. i. 137. 20 (1. 27)

**अन्तःक्षमा** (antaḥ-kṣamā) *f.* inner or mental forbearance आनन्दयित्रीमखिलस्य जन्तोरन्तःक्षमां स्वामपहाय मोहात्। ... बहिःक्षमायै स्पृहयामि BhārCam. 8. 18.

**अन्तःक्षमावत्** (antaḥkṣamā-va(n)t) *adj.* (used as noun) (one) possessing inner or mental forbearance अन्तःक्षमावतां वासे वसन्नपि निरन्तरम्। अक्षम्यहं यतोऽम्बुस्थः कुलीरस्तरणे पटुः MalliC. 8. 365.

**अन्तःक्षिति** (antaḥkṣiti) *adv.* on the earth चेदीश्वरः ...येनायम् ... प्रेषि[तः] ... अन्तःक्षिति EI. i. 34.5.

**अन्तःक्षितिस्थ** (antaḥkṣiti-stha) *adj.* present or abiding in the ground अन्तःक्षितिस्थं खननादिवाम्भोः लोकोत्तरं वर्त्म दुरापमाप Saund. 17. 22.

**अन्तःक्षिप्त** (antaḥ-kṣipta) *adj.* A thrown into (a crowd) अन्तःक्षिप्तस्थिता-नेकभीतापत्रजनाकुले। निरयाणामिवोत्पत्तिधाम्नि द्वौ तावपश्यताम् KathāSaSāg. xii. 34. 291; B intermixed up with द्रौपदीम् ... अन्तःक्षिप्तकर्पूर-कस्तूरीकुङ्कुमैरिव। वारिभिः स्नपयांचक्रुः PāṇḍaC. 4. 397.

**अन्तःक्षिप्तमण्डूक** (antaḥkṣipta-maṇḍūka) *adj.* having a frog thrown into अन्तःक्षिप्तमण्डूकं सपिधानं नवं घटम्। स्वैरमानाय्य राजा तं हरिशर्माणमब्रवीत् KathāSaSāg. vi. 4. 131.

**अन्तःक्षीणाविद्य** (antaḥkṣīṇāvidya) *adj.* (used as noun) (one) whose ignorance is weakened or attenuated at the end (of life) देहादन्यः परोऽस्म्यहम्। इति निश्चितवानन्तःक्षीण(?णा)विद्यो विमुच्यते MahāU. 4 (127)

**अन्तःक्षीर** (antaḥ-kṣīra) *n.* milk (produced) within उद्यच्चूचुकश्यामलिम्नालं-कृतमापूर्यमाणमन्तःक्षीरेण क्षणं क्षणमखिद्यत पयोधरद्वन्द्वमुद्वहन्ती (राजमहिषी) NalaCam. 3. 22 (25)

**अन्तःक्षीरिकम्प** (antaḥkṣīri-kampa) *m.* the act of shaking with milky sap inside अन्तःक्षीरिकम्पादिवातिस्निग्धवर्णः ... खुरमण्डलैरुपेतः ... तुरङ्गरत्नं भद्रवाहनो नाम AvantiKa. 89. 10.

**अन्तःक्षुर** (antaḥ-kṣura) *adj.* bearing (as if) a razor inwardly, i. e. fraud क्लिश्यन्तीहाल्पबुद्धयः। ... अन्तःक्षुरा वाङ्मधुराः ... क्षुद्राः MahāBhā. xii. 152. 16; SkandP. i (2). 5. 105.

**अन्तःक्षेत्रज्ञभास्कर** (antaḥkṣetrajña-bhāskara) *adj.* having the sun in the form of the inner self प्रतिज्ञावृक्षमफलं शान्तिच्छायासमन्वितम्। ज्ञानाश्रयं तृप्तितोयमन्तःक्षेत्रज्ञभास्करम्। येऽधिगच्छन्ति तत्सन्तस्तेषां नास्ति भयं पुनः MahāBhā. xiv. 27. 16.

**अन्तःक्षोभ** (antaḥ-kṣobha) *m.* A internal turmoil सजो हृद्यामोदास्तदिदमखिलं रागिणि जने। करोत्यन्तःक्षोभं न तु विषयसंसर्गविमुखे ŚatTrayī. 134; कमप्यन्तःक्षोभं प्रथयसि VidaMā. 2. 11; B internal disorder or disturbance ज्वरेऽधिकं विकाराः स्युरन्तःक्षोभो मलग्रहः AṣṭāSaṁ. i. 263. 23 (3. 2); C internal or mental agitation उपशमित इवेदानीमन्तःक्षोभार्णववडवानलायमानो रौहिणेयः कोपपावकः SubhaDha. 4. 21 (2) (comm. चित्तक्षोभे)

**अन्तःक्षोभकुल** (antaḥkṣobha-kula) *n.* group or multitude of internal turmoils अन्तःक्षोभकुलैरहं परिवृता प्रज्ञातुमज्ञाभवम् VidaMā. 2. 4.

**अन्तःक्षोभावेग** (antaḥkṣobhāvega) *m.* flurry or force of internal turmoil पिता ... अन्तःक्षोभावेगविक्षिप्ताक्षरमवादीत् Kād. 297. 4.

**अन्तःख** (antaḥ-kha) *n.* [Loc.] in the middle of the sky चकासदन्तःख उदीर्णदीधिति। चक्रेण चिच्छेद BhāgP. iii. 19. 14 (Padaratnāvali आकाशमध्ये)

**अन्तःखिन्न** (antaḥ-khinna) *adj.* compressed inside or down अन्तःखिन्न-भुजङ्गभोगविगलल्लालाभिरासीत्रदी SubhāRaK. 41. 26.

**अन्तःखेद** (antaḥ-kheda) *m.* inner grief or turmoil बाह्यखेदादसह्योऽन्तःखेद एव Kād. 292. 13.

**अन्तःखेदपरीतात्मन्** (antaḥkhedaparītātman) *adj.* whose mind is overpowered by, i. e. brooding with inner grief नात्तुमन्नानि शक्नोति न विहर्तुं गृहावनिम्। अन्तःखेदपरीतात्मा तूष्णीं तिष्ठति केवलम् YogVā. i. 8. 11.

**अन्तःख्या** (antaḥ-khyā-) II.P. to tell to oneself, i. e. to know internally well इन्द्र ...। अ॒न्तर्हि ख्यो जना॑नाम॒र्यो वेदो॒ अदा॑शुषाम् ṚV. i. 81. 9; अ॒न्तर्ह्य॑ख्यदु॒भे अ॑स्य॒ धेने॑ ...इन्द्रः ṚV. v. 30. 9 (*but* Sāy. गृहमध्ये निदधे) [to inquire into, investigate, MW.]

**अन्तःपक्तृता** (antaḥpaktṛ-tā) *f.* the state of being one who digests within रुद्ररूपेणान्तःपक्तृतया संनिधानं प्रार्थ्यते ŚivārkaMaDī. i. 365. 30 (*on* i. 2. 18)

**अन्तःपक्षसम्** (antaḥpakṣasm) *adv.* so as to be inside the wing (of the chariot) एनामप्राप्य निवृततान्तःपक्षसमेनां कृत्वा सव्यानवगृह्य दक्षिणैरनुपरिवर्तयाध्वै मो अप्रसूताः सर्पत BaudhŚS. ii. 76. 6.

**अन्तःपङ्क** (antaḥ-paṅka) *m., n.* A sin in the mind तव भजनवदन्तः-पङ्कमुच्छोषयन्तम् ... तपसमयमनेपीर्यामुनेषु स्थलेषु Nārāy. x. 58. 7 (comm. मनसि...दुरितम्); B mire inside (the river), Nārāy. x. 58. 7 (comm. अन्तर्नद्यादेः कर्दमम्)

**अन्तःपञ्चमकारयजन** (antaḥ-pañcamakārayajana) *n.* internal offering of five objects beginning with the sound *m* (like *madya, māṁsa, matsya, mudrā* and *maithuna*), pw.

**अन्तःपट** (antaḥ-paṭa) *m., n.* cloth held between (two persons who are to be united as pupil and teacher or bride and bridegroom until the right moment has arrived) अन्तःपटं वेदिकायां धारयित्वा ...उपनिन्युश्च बालकम् GaṇeP. ii. 10. 7; अन्तःपटं दत्त्वा श्रीसूक्तं प्रजपन्वह्निः BṛBrahmaS. i. 8. 121; वरस्य मधुपर्कं कृत्वान्तःपटं धृत्वा ...दक्षिणां दद्यात् NirṇaSi. 235. 22.

**अन्तःपटलीक्रियमाणकाया** (antaḥpaṭalīkriyamāṇa-kāyā) *adj.* (*f.*) whose body is being coated or covered inside हृष्टवानस्मि ... आसन्नवनलताकिसलयैः सरसैर्दुःखक्षतैरिवान्तःपटलीक्रियमाणकायाम् ...योषितम् HarṣaC. 323.2.

**अन्तःपतच्चिन्ता** (antaḥpatac-cintā) *f.* worry which is appearing or arising in the heart श्रुत्वा ... मिथिलावृत्तान्तमन्तःपतच्चिन्तापह्नवसावहित्यवदनत्व-ग्विप्रकीर्णस्मितः। ...अवति माम् ...न लङ्केश्वरः AnargharRā. 4. 8.

**अन्तःपतत्** (antaḥ-patat) *adj.* Ai falling in, i. e. striking the heart अन्तःपत-न्मन्मथपुष्पबाणपक्षानिलेनेव कृताभिवृद्धीन्। ...निःश्वासदण्डान्मुहुरुत्सृजन्तीम् (सखीम्) HarVi. 25. 48; Aii appearing or arising in the heart, cf. अन्तःपतच्चिन्ता; B falling inside ज्वलन्माणिक्यतेजोभिरलक्षितनतोन्नताः। (सभायां) तस्यामन्तःपतन्तः के नागमन् जनहास्यताम् PāṇḍaC. 5. 517.

**अन्तःपतित** (antaḥ-patita) *adj.* 1A fallen in, i. e. reflected inside प्रतिफलितमूर्तिना गगनपिधानकेनेवाल्पकत्वादन्तःपतितेन महत्त्वमद्भुतं बिभ्राणम् (राजतडागमद्राक्षीत्) UdaySuKa. 129. 18; 1B dwelling within the jurisdiction, i. e. inhabitant महाराजश्रीश[क्ति]वर्म्मा कलिङ्गविषये राकुलवग्रामे सर्वसमन्वागतान्तह-[Read °न्तः प] पतितान् आज्ञापयति EI. xii. 2. 4; 2 fallen in, i.e. included within इन्द्रियगुणानामन्तःपतितत्वान्न प्रमेयत्वम् NyāyMañ. ii. 53. 1.

**अन्तःपत्र** (antaḥ-patra) *n.* inner petal विरलविरलैरन्तःपत्रैर्मनाङ् मिलितं ततः। ...मुकुलनविधौ वृद्धाब्जानां बभूव कदर्थना SubhāRaK. 27. 24.

**अन्तःपद** (antaḥ-pada) *n.* A [Loc.] within the word or in the middle of the word अनुस्वारं रोष्मसु मकारः। नुधान्तःपदेऽरेफे VājaPrāti. 4. 2; 4.8; नान्तःपदे ...न्तःस्थासु VājaPrāti. 4. 119; 4. 163; अनुनासिकोऽन्तःपदे ह्रस्वः

CaturA. (Śau.) 1. 83; उपसर्गेष्वेवान्तःपदे CaturA. (Śau.) 2.33; 3. 59 (*but* MW. *adv.* अन्तःपदे); B [Loc.] at the interior विस्तारेऽल्पगृहे क्वचिद् विशिखभक्तेऽन्तःपदे पीठिकां पङ्क्त्या गर्भगृहं करोतु TantrSa. 2. 20; ŚilpaRa. i. 21. 4; C inner resort, i. e. inner soul एवं सर्वकलभावेभ्यः कृत्वा निर्मूलम् ... मतिरन्तःपदं याति यथा पुत्र तथा कुरु YogVā. iv. 53. 32 (comm. अन्तःपदं प्रत्यग्भूतं ब्रह्म)

**अन्तःपददीर्घीभाव** (antaḥpada-dīrghībhāva) *m.* lengthening in the middle of the word अन्तःपददीर्घीभावे VājaPrāti. 4. 192 (comm. पदमध्ये दीर्घीभावः)

**अन्तःपदम्** (antaḥpadam) *adv.* in the middle of the (inflected) word पुरएता तितउना प्रउगं नमउक्तिभिः। अन्तःपदं विवृत्तयः ṚPrāti. 2. 5, cf. **अन्तःपदस्थ.**

**अन्तःपदविकृत** (antaḥpada-vikṛta) *n.* change or modification in the middle of the word अन्तःपदविकृतमनन्यकारितम् Upalekha. 55. 23 (comm. अन्तर्मध्ये पदस्य विकारः यः तच्च वेष्टयेत्)

**अन्तःपदस्थ** (antaḥpada-stha) *adj.* occurring in the middle of the word तकारवर्गस्तु टकारवर्गमन्तःपदस्थोऽपि पकारपूर्वः ṚPrāti. 5. 3; युग्मान्तःस्थादन्तमूलीयपूर्वैरन्तःपदं नम्यतेऽन्तःपदस्थैः ṚPrāti. 5. 10; 5. 20.

**अन्तःपदार्थविवेचन** (antaḥpadārtha-vivecana) *n.* discussion about the internal object, i. e. the soul सर्वत्रान्तःपदार्थविवेचने मनोयुक्ताभ्यास इष्यते AdvaTāU. 385. 11.

**अन्तःपयस्** (antaḥ-payas) *n.* [Loc.] A in the innermost water (of the ocean in the form of the battle), i. e. in the thick of the fight संग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः VeṇiSaṁ. 1. 305; B inside the water स्नात्वासौ सखेऽन्तःपयसि रघुपतिर्दिव्यदेहः ...व्योम्नि स्थिरोऽभूत् MahāN. 9. 147.

**अन्तःपरामर्शपूर्णता** (antaḥparāmarśapūrṇa-tā) *f.* the state of being full of comprehension or consideration within सर्वस्यान्तःपरामर्शपूर्णतास्ति प्रवर्तने ŚivDṛ. 2. 15.

**अन्तःपरिकृष्यमाण** (antaḥ-parikṛṣyamāṇa) *adj.* which is being drawn inward or withheld inside (the mouth) हारलतामपरिस्फुटमन्तःपरिकृष्यमाणभारत्या। ...इत्यभिदधतीं जहुः प्राणाः KuṭṭaMa. 471.

**अन्तःपरिक्षिप्त** (antaḥ-parikṣipta) *adj.* thrown inside, i. e. stuck deep inside मोक्षे ...। बहिरन्तःपरिक्षिप्तशल्यतुल्या भवन्ति च। नाधयः TriṣaŚaPuC. i. 3. 570.

**अन्तःपरिग्रह** (antaḥ-parigraha) *m.* holding in the heart, i. e. deep attachment अन्तःपरिग्रहो रागो बहिस्त्वनुचितोपधिः। लोकेऽपि वन्द्यते त्यक्तबहिरन्तःपरिग्रहः PārśvC. 1. 559.

**अन्तःपरितोष** (antaḥ-paritoṣa) *m.* inner satisfaction सर्वथा धैर्यमाधेहि। धारय परममन्तःपरितोषम् TilaMañ. 346. 19.

**अन्तःपरिधान** (antaḥ-paridhāna) *n.* the innermost garment, MW., Apte.

**अन्तःपरिधि** (antaḥparidhí) *adv.* [P. vi. 1. 223] within or inside the enclosing sticks यत् कीटावपन्नेन जुहुयात् ...यदनायतने निनयेत् ...। मध्यमेन पर्णेन द्यावापृथिव्यर्यचीन्तःपरिधि निनयेत् KāṭhS. 35. 18 (iii. 64. 9); KapiKaS. 48. 16 (307. 4); TaiBr. III. vii. 2. 2; BhārŚS. ix. 3. 5; ĀpaŚS. ix. 2. 5; MānŚS. 98. 1; HirŚS. xv. 1. 43 (271. 12); VaikhāŚS. 20.5; यजमानचमसमुन्नयेत् तस्मिन् द्वे दर्भतरुणके प्रास्ते स्यातां तयोर्वषट्कृतेऽन्तःपरिधि पूर्वं प्रास्येत् AitBr. 35. 7 (888); यदि पीतापीतौ सोमौ संगच्छेयातामन्तःपरिध्यङ्गारान्निर्वर्त्य जुहुयात् PañcBr. ix. 9. 8; ĀpaŚS. xiv. 30. 2; MānŚS. 102. 13; VaikhāŚS. 21. 16; गौपायनानां वै सत्त्रमासीनानां किरातकुल्यावसुरमाये अन्तःपरिध्यसून् प्राकिरत PañcBr. xiii. 12. 5 (Sāy. परिधीनां मध्यदेशे); JaimiBr. 3. 168; आयतनमास्तावः। आयतन एव तदेतान् कामान् प्रतिष्ठापयन्ति। तासामत्र यावत्कामं निनीय, अथान्तःपरिधि निनयेत् JaimiBr. 3. 116; 3. 169; सर्वा दिशः समेधन्ते। अन्तःपरिधि पिन्वयति तेजसोऽस्कन्दाय TaiĀ. v. 8. 5 (626. 6); ŚāṅkhāŚS. xiii. 12. 7; उदङ्ङत्याक्रम्य जुह्वामप आनीय संक्षालनमन्तःपरिधि निनयति BaudhŚS. i. 26. 8; ĀpaŚS. ii. 21. 7; VaikhāŚS. 6. 10; 15. 8; महावीरम् ... अथैनमन्तःपरिध्यभिपीपयतोऽध्वर्युश्च प्रतिप्रस्थाता च BaudhŚS. i. 279. 22; iii. 168. 6; यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिष्येत् ... चमसेषु हूयमानेष्वन्तःपरिध्यङ्गारं निर्वर्त्य ...अस्मै भक्षं प्रयच्छेत् ĀpaŚS. xii. 24. 5; HirŚS vii. 7. 43 (882. 27); VaikhāŚS. 15. 31; हुताहुतसंसर्गेऽङ्गारमन्तःपरिधि निर्वर्त्य। कुशतरुणेन जुहोति KātyŚS. xxv. 11. 35; यजमानः ...विक्षरन्तम् (महावीरम्) अनुमन्त्रयते दिशोऽन्तःपरिध्यनुप्रहावयति HirŚS. xxiv. ... निवपेयुः उन्नेतर्युपहवमिष्ट्वा ...(धानान्) द्विरुपघ्राय पश्चादाहवनीयस्यान्तःपरिधि LāṭyāŚS. ii. 11. 12; DrāhyŚS. vi. 3. 18; सूक्तेनाप्यस्तुवन्नग्निं द्वैपदेन यथाविधि। अग्निरप्यब्रवीदेतानयमन्तःपरिध्यसुः BṛDe. 7. 98; अन्तःपरिधि साध्यांस्तानाम्नातांस्तु पितृन्वुचा निनीयान्तःपरिधि वै निर्णिज्य ĪśānŚiPa. i. 14. 65.

**अन्तःपरिधिदर्शन** (antaḥparidhi- darśana) *n.* perceiving or speaking within or inside the enclosing sticks यत् समाने लिङ्गत्वेऽन्तःपरिधिदर्शनमसाधकमितरत्साधकमिति ŚābaBh. 1633. 4 (*on* viii. 4. 23)

**अन्तःपरिधिदेश** (antaḥparidhi-deśa) *m.* region within or inside the enclosing sticks विष्यन्दमानं मही द्यौः पृथिवी च न इत्यन्तःपरिधिदेशे निर्वपेयुः ĀśvaŚS. I. iii. 10. 24; I. vi. 12. 5; अन्तःपरिधिदेशे अन्तर्वेदिदेशे इति ŚābaBh. 1634. 19 (*on* viii. 4. 28)

**अन्तःपरिपूर्णशोणितयुत** (antaḥparipūrṇaśoṇita-yuta) *adj.* having blood completely filled inside (due to puncture) वर्ज्या वह्निविधानतः ... क्षीणोऽन्तःपरिपूर्णशोणितयुतः श्रान्तः सशल्यश्च यः ... नरः KalyāKā. 21. 23.

**अन्तःपरिमार्जन** (antaḥ-parimārjana) *n.* A type of medicinal therapy (*lit.* cleansing of the internal part (of the body)) शरीरदोषप्रकोपे खलु शरीरमेवाश्रित्य प्रायशस्त्रिविधमौषधमिच्छन्ति। अन्तःपरिमार्जनं बहिःपरिमार्जनं शस्त्रप्रणिधानं चेति। तत्रान्तःपरिमार्जनं यदन्तःशरीरमनुप्रविश्यौषधमाहारजातव्याधीन् प्रमार्ष्टि CaraS. i. 11. 55; B type of caustic acid (which helps to cleanse the body internally) क्षारो हि ...सर्वरसाधिष्ठानम् ...। स द्विधा बाह्यान्तःपरिमार्जनेन AṣṭāSaṁ. i. 190. 2 (1. 39); अर्शांसि क्षारशस्त्राग्निलेपाभ्यङ्गैरुपाचरेत्। दृश्यान्यदृश्यानि पुनः सदान्तःपरिमार्जनैः AṣṭāSaṁ. ii. 65. 23 (4. 10)

**अन्तःपरिमार्जन** (antaḥ-parimārjana) *adj.* which cleanses or purifies the internal part (of the body) तृष्णामोहपरीतस्य तस्य दाहज्वरापहम्। विधिं यथोक्तं युञ्जीत बाह्यान्तःपरिमार्जनम् AṣṭāSaṁ. ii. 50. 5 (4. 9)

**अन्तःपरिवेषबन्धिन्** (antaḥpariveṣa-bandhin) *adj.* binding, i. e. forming a circle within or inside तां प्रति ...शृङ्गारचेष्टा विविधा बभूवुः। कश्चित् कराभ्यामुपगूढनालम् ...। रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयांचकार RaghuVa. 6. 13; SaraKaṇṭhā. 584. 17.

**अन्तःपरिवेषशोभिन्** (antaḥpariveṣa-śobhin) *adj.* beautiful on account of the circle (of pollen) inside कश्चित् कराभ्यामुपगूढनालम् ...। रजोभिरन्तःपरिवेषबन्धि( v. l. °शोभि) लीलारविन्दं भ्रमयांचकार RaghuVa. 6. 13.

**अन्तःपरिषद्भव** (antaḥpariṣad-bhava) *adj.* being or present in the inner circle (of gods) (स्वयंप्रभायाः) अस्या दृढधर्माख्यो देवोऽन्तःपरिषद्भवः। शुचं व्यपोह्य सन्मार्गे मतिमासंजयत्तराम् MahāP. 6. 53.

**अन्तःपरिस्पन्द** (antaḥ-parispanda) *m.* inner throbbing, i. e. inner activity अस्ति विमर्शरूपा स्वसंविद् विषयान्तरानवभासिनी। तस्या झटित्युद्वलनाकारप्रतिभोन्मज्जनात्मकोऽन्तःपरिस्पन्दः पूर्णाहंभावनामकस्तुर्यावस्थानामकश्च LalitāSaBh. 13. 20 (*on* 30)

**अन्तःपरीणाह** (antaḥ-pariṇāha) *m.* inner circumference or width इदं विमानं खलु पुष्पकाख्यम् ...। अन्तःपरीणाहमनुष्य मातुं त्रिविक्रमालं यदि हि त्वमेव ...गन्तासि Rāgh. 20. 50.

**अन्तःपर्शव्य** (antaḥ-parśavyá) *n.* [P. iv. 2. 94] A intestinal flesh (*lit.* flesh which is inside the ribs) ईशानं मन्युना महादेवमन्तःपर्शव्येन VājaS. 39. 8 (Mahīdhara पार्श्वास्थिसंबन्धिना मांसेन) (*but* Apte *adj.*); B the word *antaḥparśavya* (विसर्जनीयः न सकारषकारावापद्यते) वाजपतिर्वसिः ...अन्तःपर्शव्येन VājaPrāti. 3. 38; cf. **अन्तःपार्श्व.**

**अन्तःपल्लवजृम्भमाण** (antaḥpallava-jṛmbhamāṇa) *adj.* opening or blossoming in the midst of foliage (new leaves) अन्तःपल्लवजृम्भमाणसुमनःसंदोहमन्दस्मिताः। ...नववीरुधः क्षितिरुहैराक्रीडवाटीं गताः VasaTi. 6. 11.

**अन्तःपवित्र** (antaḥ-pavitrá) *n.* [Abl.] from inside of the strainer, i. e. the filtered stream अन्तर्यामो नाम। तमन्तःपवित्राद् गृह्णाति। ...अस्याप्युपांशुरन्तःपवित्राद् गृहीतो भवति ŚatBr. IV. i. 2. 3; ŚatBr. (K.) V. i. 2. 2.

**अन्तःपशु** (antaḥ-paśu) *m.* [Loc.] at the time of the cattle (staying) inside (the stable or village), i. e. in the evening (when the cattle have come home) and in the morning (before they go out) अन्तःपशौ पशुकामस्य सायंप्रातः (होमकालः) KātyŚS. iv. 15. 14 (comm. अन्तःपशौ काले ग्राममध्ये पशवो यस्मिन् काले। सायं पशुषु ग्राममध्य आगतेषु प्रातश्च ग्रामादनिःसृतेषु)

**अन्तःपश्यदवस्था** (antaḥpaśyad-avasthā) *f.* stage or condition of perceiving within the soul स एवात्मा सर्वदिव्यापकत्वेन वर्तते। अन्तःपश्यदवस्थैव चिद्रूपत्वमरूपकम् ŚivDṛ. 2. 3 (comm. भोक्तृतालया)

**अन्तःपा** (antaḥ-pā-) I.P. cf. **अन्तःपेय** [Viśva.]

**अन्तःपाक** (antaḥ-pāka) *m.* baking or burning inside (earthenware)

अन्तःपाकस्यापि सच्छिद्रत्वादवयविनाम् ...उपपत्ते: TattvPradi (Ci.) 320. 2.

**अन्तःपाटलीक्रियमाणकाया** (antaḥ-pātalikriyamāṇakāyā) *adv. (f.)* whose body is being reddened inside दृष्टवानस्मि ... आसन्नवनलताकिसलयै: सरसैर्दु:खक्षतैरिवान्त:पटली (v.l. पाटली) क्रियमाणकायम् ... योषितम् HarṣaC. 323.2.

**अन्तःपाण्डुकवनम्** (antaḥpāṇḍukavanam) *adv.* inside the Pāṇḍuka forest तत्रान्त:पाण्डुकवनं चूलिकादक्षिणेन तु ...। सिंहासने जिनस्नानयोग्येऽङ्कस्थापितप्रभु:। न्यषीदद् वासव: PārśvC. 5. 89.

**अन्तःपात** (antaḥ-pātá) *m.* **1** name or designation of a peg (*lit.* internal or intermediate peg) पूर्वा॒र्ध्यो व॒र्षिष्ठ स्थूणाराजो भ॒वति। त॒स्मात् प्राङ् प्र॒क्रामति त्री॒न् विक्रमांस्त॒च्छङ्कुं नि॒हन्ति॒ सोऽन्त:पात॒: ŚatBr. III. v. 1. 1; ŚatBr. (K.) IV. v. 1. 1; य॒देवा॒त्रान्त:पाते॒न गा॒र्हपत्यस्य वे॒देर्व्य॒वच्छिन्नं भ॒वति तदे॒वैत॒दनुसं॒तनोति ŚatBr. III. v. 2. 2; ŚatBr. (K.) IV. v. 2. 2 [ a post fixed in the middle of the place of sacrifice, MW; a post fixed in the middle of the sacrificial ground, Apte]; **2** type of euphonic combination (insertion of a letter) आहु: सकारोदययोस्तकारं जकारे शकारपरे चकारम्। तेऽन्त:पाता: ṚPrāti. 4. 7 (Uvaṭa अन्तर्मध्ये पदयो: पतन्तीत्यन्त:पाता:। एतेऽन्त:पातसंज्ञा: संधयो वेदितव्या:); **3** inclusion यदा तु सारूप्यमात्रवशेनाप्रस्तुतप्रशंसायामप्रकृतप्रकृतयो: संबन्धस्तदाप्यप्रस्तुतस्य सरूपस्याभिधीयमानस्य प्राधान्येनाविवक्षायां ध्वनावेवान्त:पात: Dhvanyā. 128. 2 (*on* 1. 13); केचिच्चित्राख्यं तृतीयं काव्यभेदमिच्छन्ति। ... तन्न। ... आस्वाद्यव्यङ्ग्यत्वमनास्वाद्यव्यङ्ग्यत्वं वा। आद्ये प्राचीनभेदयोरेवान्त:पात: SāhiDa. 248.4; 460.9; **4** [ Loc.] in the course or occurrence within अन्त:पाते साहसानां नाद्भुतं तद्विधेर्वशात्। जीयते लक्षमेकेन लक्षेणैकोऽथवा युधि RājTa. (Ka.) 8. 1499.

**अन्तःपातित** (antaḥ-pātita) *adj.* inserted or included in, PW.; MW.; inserted, included or comprised in, falling within, Apte.

**अन्तःपातिता** (antaḥpāti-tā) *f.* the state of being included or comprised in (वैश्वदेवान्नस्य) तस्यापि चान्त:पातित्वात् सर्वाद्यस्यैव युक्तिमान्। ग्रहस्तस्य गृहीतौ तु नास्यान्त:पातिता तथा BṛĀraUBhVā. i. 5. 32 (comm. सर्वाद्यान्नेऽन्तर्भूतं वैश्वदेवान्नम्)

**अन्तःपातित्व** (antaḥpāti-tva) *n.* **1** the state of occurring in the mind यो बाह्य: स खलु जलैर्निरासि रागो यश्चित्ते स तु तदवस्थ एव तेषाम्। धीराणां व्रजति हि सर्व एव नान्त:पातित्वादभिभवनीयतां परस्य ŚiśuVa. 8. 58 (comm. अन्तर्गतत्वात् ); **2A** the state of being included in (वैश्वदेवान्नस्य) तस्यापि चान्त:पातित्वात् सर्वाद्यस्यैव युक्तिमान् BṛĀaUBhVā. i. 5. 32; **2B** the state of falling within, i. e. being a constituent part समस्तैरेव ...पदार्थै: समग्र एव य: समाप्तिं नीतो लोकस्तं खलु तदन्त:पातित्वेऽप्यचिन्त्यस्वपरपरिच्छेदशक्तिसंपदा जीव एव जानीते न त्वितर: TattvPradī. (A.) 207. 1 (*on* 2.53); अङ्गुलीनखादीनामवयवावयविनोरभेदोपचारेणान्त:पातित्वात् तल्लक्षणेनैव गतार्थता ViraMi. (Lakṣaṇa.) 45. 19.

**अन्तःपातिन्** (antaḥ-pātin) *adj.* **A** falling within, comprised in, which comes under (the jurisdiction of a certain district) विदितमस्तु भवतामेतद्विषयान्त:पाति मयु(यू)रशाल्मलाग्रहारक्षेत्त्रं(त्रं) राज्ञा श्रीभूतिवर्म्मणा ताम्रपट्टीकृतम् EI. xix. 118. 6; कुमारीग्रामो नाम ग्राम: ...अर्ल[न्दि] ग्रामा[त्*] थिऊरग्रामाद्य पू[र]व्[व]त ...पूनकविषयान्त:पाती EI. xiii. 280. 31; श्रीनगरभुक्तौ राजगृहविषयान्त:पाति...गयाविषयान्त:पातिकुमुदसूत्रवीथी प्रतिव(ब)द्धपालामकग्रामेषु EI. xvii. 321.26; xxiii. 291.6; महाराज श्रीभोजदेव:। ...श्रीकारञ्जरमण्डलान्त:पाति उदु(म्ब)रविषयस(म्ब)द्धवलाकाग्रहारे समुपागतान् सर्व्वानेव ...समाज्ञापयति EI. xix. 18. 6; ix. 9. 53; मया श्रीहर्षपुराद्धीष्टमशतान्त[:]पाति[क]र्प्पटवाणिज्यचतुर[ा]शीतिकाप्रतिबद्धरूरिद्धादशकान्त[:]पातिव्याघ्रासग्राम: (सभाभिजिख्यते) EI. i. 55. 35-36; रामतीर्थि[का]चतुरशीति[कान्त:]पातिकिणिहिकाग्राम: EI. xxv. 170. 30; चतुर्द्दशग्रामशतोपलक्षितकोन्क[ङ्क]णान्त:पातिमाहिरिरविषयान्न(न्त)र्व[र्]तिभादानग्राम: EI. iii. 274. 56; xxii. 137.4; xviii. 322. 6; xx. 106. 11; xvi. 12. 8; xvi. 275. 7; **B** being or residing in, dwelling in करहाटदशसहस्रान्त:पातिभ्यो ब्राह्मणेभ्य: ...कुमारिग्रामो नाम ग्रामो दत्त: EI. xiii. 280. 26; श्रीकर्ण्णदेव: स्वभुज्यमान°- ...°षड्विंशत्यधिकग्रामशतान्त:पातिन: समस्तराजपुरुषान् ...बोधयति EI. i. 317. 4; **C** being contained, i. e. situated in उदकं शनैरभ्यवेयात्र धावेदन्त:पातिशर्करादिभि: BālamBha. i. 322. 26 (*on* 1. 100) [inserted in, MW.; Apte; coming out from within, *nt.*]

**अन्तःपातिनैमित्तिक** (antaḥpāti-naimittika) *adj.* (used as noun) (main ritual) which includes occasional or optional rites within तन्त्रान्त:पातिनैमित्तिके तु न पार्थक्येन पुनर्ब्रह्मासनास्तरणप्रभृतय: ViraMi. (Saṃskāra p. 1025. 13)

**अन्तःपातिसकलपाप** (antaḥpāti-sakalapāpa) *n.* all the sins which are falling, i.e. included within सर्वेत्यनेनान्त:पातिसकलपापनिरास: सूचित: BālamBha. iii. 135. 13 (*on* 3. 243)

**अन्तःपात्य** (antaḥ-pātya) *m.* **1** name of a peg (*lit.* internal or intermediate peg) पूर्वार्ध्यात् स्तम्भात् पुरस्तात् त्रिषु प्रक्रमेषु शङ्कुं निहन्ति सोऽन्त:पात्य: KātyŚS. viii. 3. 7; अन्त:पात्यात् षट् प्रक्रमान् प्राङ् यात्वा ...औदुम्बरीं मिनोति KātyŚS. viii. 5. 30; उख्यस्थानेऽर्धव्यामेन गार्हपत्यस्य परिलिखति। मण्डलाद् वा प्रक्रमणमन्त:पात्यस्य KātyŚS. xvi. 7. 30; xvi. 3. 27; (अध्वर्युप्रतिप्रस्थातारौ) दीक्षावत् पावयतोऽन्त:पात्ये (यजमानम्) श्येनपत्त्राभ्याम् KātyŚS. xix. 2. 27; xxvi. 7. 2; **2** group of three steps (near the intermediate peg to the east of *gārhapatya*, up to the *vedi*) नान्त:पात्यगार्हपत्ययोर्वृद्धिर्भवति KātyŚuS. 6. 6 (comm. व्याममात्रविस्तारा मण्डलाकारा (भू:) गार्हपत्यशब्देनोच्यते। तस्मात् पूर्वभागे वेद्यन्तपर्यन्त प्रक्रमत्रयपरिमितो भूभागोऽन्त:पात्य:) [a post fixed in the middle of the place of sacrifice, MW.; a post fixed in the middle of the sacrificial ground, Apte; (in Gr.) insertion of a letter, MW.; Apte]

**अन्तःपात्यदेश** (antaḥpātya-deśa) *m.* [Loc.] near the region of intermediate or internal peg आज्यप्रोक्षणीरन्त:पात्यदेशे उत्पूय पश्चाज्यग्रहणम् KātyŚS. viii. 6. 34 (*but* comm. अन्त:पात्यसंज्ञके देशे); यूपं परीत्य (रथम्) अन्त:पात्यदेशे स्थापयति KātyŚS. xv. 6. 22; अन्त:पात्यदेशे संभारान् निदधाति KātyŚS. xxvi. 1. 2.

**अन्तःपात्यपुरस्तात्** (antaḥpātyapurastāt) *adv.* in front of the intermediate peg रोहिते चर्मण्यानडुहेऽन्त:पात्यपुरस्तादिष्टका: करोति प्रथमचिते: KātyŚS. xvii. 3. 17.

**अन्तःपात्यसमीप** (antaḥpātya-samīpa) *n.* [Loc.] near the intermediate peg (अन्त:पात्यसहितं बर्हिरन्तं प्रेष्यति) अन्त:पात्यसमीपे स्थित: ...प्रेष्यति comm. *on* KātyŚS. viii. 6. 26.

**अन्तःपात्यसहितम्** (antaḥpātyasahitam) *adv.* near the intermediate peg अन्त:पात्यसहितं बर्हिरन्तं प्रेष्यति KātyŚS. viii. 6. 26 (comm. अन्त:पात्यसमीपे स्थित:) [Viśva.]

**अन्तःपात्यस्थान** (antaḥpātya-sthāna) *n.* [Loc.] near the place or region of intermediate peg अन्त:पात्यस्थाने चर्मणि ...सीसेन शष्पक्रय: KātyŚS. xix. 1.18.

**अन्तःपात्र** (antaḥ-pātrá) *n.* [APrāti. 201; P. ii. 4. 84] [Loc.] inside an inner vessel, at the bottom of an inner vessel श्व॑न्वतीरप्स॒रसो॒ रू॒प॑का उ॒तार्बु॑दे। अ॒न्त॒:पा॒त्रे रेरि॑हतीं रि॒शां दु॑र्णिहितै॒षिणी॑म्। सर्वा॒स्ता अ॑र्बु॒दे त्वम॒मित्रे॑भ्यो दृ॒शे कु॑रु AV. xi. 9. 15; AV. (P.) xvii. 12.1.

**अन्तःपादम्** (antaḥpādam) *adv.* [P. vi. 1. 115; viii. 3. 103; Nyās. i. 618. 17 (*on* iii. 2. 66)] **A** in the interior or middle of a quarter of a *ṛc* अन्त:पादमकाराद्येत् संहितायां लघोर्लघु। यकाराद्यक्षरं पदं वकाराद्यपि वा भवेत् ṚPrāti. 2. 14; 2. 26; अन्त:पादं नाम्युपध: सकार: षकारमप्यूष्मपरैर्यथोक्तम्। अन्यैरेकारान्नतिरत्र पूर्वा ततो व्यापत्तिर्भवतीति विद्यात् ṚPrāti. 5. 1; 8. 1; अन्त:पादमिति सप्तम्यन्तमेतत् Nyās. ii. 274. 21 (*on* vi. 1. 115); SaraKaṇṭhā. (Gr.) viii. 1. 30; **B** in the middle of a quarter of a verse (in general) अन्त:पादमिति। पादस्य मध्ये। ...पादग्रहणेन ऋक्पादश्लोकपादयो: सामान्येन ग्रहणम् Nyās. ii. 1094. 4 (*on* viii. 3. 103)

**अन्तःपादविकृत** (antaḥpāda-vikṛta) *n.* change or modification in the quarter of a *ṛc* अन्त:पद(v. l.°पाद Viśva.)विकृतमनन्यकारितम् Upalekha. 55. 23.

**अन्तःपादोत्तर** (antaḥpādottara) *n.* Uttara entablature on the inner pillar श्रीकेशस्य तु संस्थानम् ...। अन्त:पादोत्तरैर्युक्तं मध्ये वारणशोभितम् MayaMa. 24. 108.

**अन्तःपापाग्नि** (antaḥpāpāgni) *m.* fire (i. e. destroyer) of inner sin संसारपतितश्रान्तदु:खध्वंस नमोऽस्तु ते। ...प्रतिस्वस्वनदीप्ताय अन्त:पापाग्नये नम: SkandP. ii (2). 17. 124.

**अन्तःपार्श्व** (antáḥ-pārśva) *n.* [TaiPrāti. 8. 31] **1** intestinal flesh (*lit.* flesh which is inside the ribs) (मन्त्रानुवाक:) चि॒त्तꣳ संन्ता॒नेनं ...म॒हादे॒वम॒न्त:पा॑र्श्वेन TaiS. I. iv. 36. 1; TaiĀ. iii. 21. 1 (362. 1); comm. *on* TaiPrāti. 8. 31; cf. अन्त:पर्शव्य; **2** [Loc.] in the inner side पादयोर्दश नखा:। तेषामुभौ पुरोनखौ। पुरोनखद्वयस्य प्रत्येकं बहि:पार्श्वे द्वौ सनखौ। अन्त:पार्श्वे नखश्वा(स्रा)वौ (प्रदेशौ) Hastyāyur. 528. 7 (3. 29)

**अन्तःपार्श्वकण्डू** (antaḥpārśva-kaṇḍū) *f.* itching sensation over the inner sides खुरशिखरसमाकृष्टरेणुस्तुरंग: ...। पृष्ठान्त:पार्श्वकण्डूव्यपनयनवशाद् द्विस्त्रिरुद्ध-

र्तिताङ्गः ...वपुरास्यानुपूर्वं धुनोति SaduktiKa. 2[illegible].

**अन्तःपार्श्वापवृत्तशिरस्** (antaḥpārśvāpavṛtta-śiras) *adj.* whose head is bent inwards or to the side (मूढगर्भः) अन्तःपार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना ...योनिमुखं प्रतिपद्यते SuśruS. ii. 8. 5 (comm. पार्श्वमध्यनिक्षिप्तशिराः)

**अन्तःपार्श्व्य** (antaḥpārśv-yá) *n.* **A** intestinal flesh (*lit.* flesh which is inside the ribs) रुद्रस्यांन्तःपार्श्व्यम् VājaS. 39. 9 (Mahīdhara पार्श्वस्यान्तर्मध्ये भवम् मांसम्); VājaS. (K.) 39. 7; **B** the word *antaḥpārśvya* वाजपतिर्वासः ...अन्तःपार्श्व्यमिति च (एते विसर्जनीयाः यथाप्राप्तं न सकारषकारौ आपद्येते) VājaPrātī. 3. 38 [flesh at both sides, MW.]

**अन्तःपाल** (antaḥ-pāla) *m.* keeper or guard of the harem अन्त(v.l. °न्तः)-पालश्च यास्यन्ति सदारो यत्र राघवः Rāmā. ii. App. I. 15 (23) (*but* PW. keeper or guard of palace)

**अन्तःपाषाणसंयुक्त** (antaḥ-pāṣāṇasaṁyukta) *adj.* having (structure of) stones inside यवमानं घनं शेषं गाढमत्र प्रकल्पयेत्। गाढयुक्तं तु वृत्ताभमन्तःपाषाणसंयुतम् ŚilpaRa. ii. 16. 49.

**अन्तःपिटकाञ्चित** (antaḥ-piṭakāñcita) *adj.* distinguished by or covered with boils from inside सु(शू)नः स्तब्धो गुरुः शीतः सुप्तोऽन्तःपिटकाञ्चितः। ...स कफेनातुरो व्रणः Hastyāyur. 355. 17 (3. 1)

**अन्तःपिण्डिकापीठपातिन्** (antaḥpiṇḍikāpīṭha-pātin) *adj.* falling (for refuge) on the broad pedestal (of the idol) inside अन्तःपिण्डिकापीठपातिभिश्च सर्वपशुजीवितैरिव शरणमुपागतैरलक्तकपटैरविरहितचरणमूलाम् ...चण्डिकामपश्यत् (चन्द्रापीडः) Kād. 225. 14.

**अन्तःपिहित** (antaḥ-pihita) *adj.* **A** hidden inside or within सरस्वत्याः स्रोतः परिमलगभीरं विजयते। अतिस्वादुन्यन्तःपिहितरसरम्ये यदुपरि प्लवन्ते भूयांसः कतिचिदपि मज्जन्ति निपुणाः SaduktiKa. 51. 10; **B** concealed in the heart नूनमियमन्तःपिहितमदनविकारा वर्तते SāhiDa. 338. 12.

**अन्तःपिहितज्योतिस्** (antaḥpihita-jyotis) *adj.* whose light (of knowledge) is covered or hidden within अन्तःपिहितज्योतिः संतुष्यत्यात्मनोऽन्यतो मूढः YogŚā. 12. 10.

**अन्तःपीठ** (antaḥ-pīṭha) *adj.* **A** being, i.e. situated inside the seat or pedestal लिङ्गानि ... मुमुक्षूणामन्तःपीठानि कारयेत् ĪśānŚiPa. ii. 8. 78; **B** (spout) of internal pedestal नालं प्रकर्तव्यं वामे प्रासादमध्यमे। अन्तःपीठस्य नालस्य समं वा बहिरिष्यते MayaMa. 19. 29.

**अन्तःपीडा** (antaḥ-pīḍā) *f.* internal agony or suffering देव्यपि कादम्बरी ... अन्तःपीडाकूणननिमीलितेन चक्षुषा मूर्च्छितेव ... सकलमेव तं दिवसमस्थात् Kād. 250. 22.

**अन्तःपीडोपराग** (antaḥpīḍoparāga) *m.* **1** dye in the form of internal agony or suffering अन्तःपीडोपरागरक्ते रक्ततामरसानुकारिणि मुखे ... दृष्टिं निवेश्यैव ... शुकनासो राजानमप्राक्षीत् Kād. 292. 19; **2** effect of the internal agony or suffering, Kād. 292. 19.

**अन्तःपुट** (antaḥ-puṭa) *n.* [Loc.] in the internal layer or wrapper चूर्णं विभावयेत्। ... अर्कपत्रं लिपेत्तेन रुद्ध्वा चान्तःपुटे पचेत् RasaRaSa. 19.27.

**अन्तःपुर** (antaḥ-pura) *n.* **1A** inner apartment of a royal palace, harem, female apartment **B** inner part of a house **C** king's (private) palace, royal residence **D** inner part of the city, interior of the city **E** inside or interior of the palace **F** sanctum sanctorum or inner chamber (where the image of a deity is installed) **G** living place or covert **2A** inmates or royal ladies in the inner apartment or harem **B** queen **C** supervisor of the harem, chamberlain **Di** wife or consort **ii** housewife **3** the word *antaḥpura* **1A** inner apartment of a royal palace, harem, female apartment ययातिः ...। प्रविश्यान्तःपुरं तत्र देवयानीं न्यवेशयत् MahāBhā. i. 77. 1 = MatsyaP. 31. 1; अन्तःपुरं प्रवेश्यैव (शकुन्तलां पूजयामास) MahāBhā. i. 683* (2); i. 166. 23; ii. 183* (3); iii. 113. 10; iii. 127. 10; वासांसि परिजीर्णानि लब्ध्वान्यन्तःपुरेऽर्जुनः। ... पाण्डवेभ्यः प्रयच्छति MahāBhā. iv. 12. 7; (उत्तरः) अन्तःपुरे श्लाघमान इदं वचनमब्रवीत् MahāBhā. iv. 33. 21; iv. 67. 2; संजयः ...। अन्तःपुरमुपस्थाय द्वाःस्थं वचनमब्रवीत् MahāBhā. v. 32. 2; v. 38. 12; अन्तःपुरं प्रविश्यैव संजयः ... राजानमुपजग्मिवान् MahāBhā. viii. 7* (5); अन्तःपुरे ततस्तस्य स्त्रियः ... परमदुःखिताः MahāBhā. xiii. App. I. 8 (48); अन्तःपुरेषु च तदा सुमहान् रुदितस्वनः। प्रादुरासीत् MahāBhā. xv. 45. 42; अन्तःपुरं प्रविश्यास्मै कन्यां दत्त्वा यथाविधि। ... राजा हर्षमवाप Rāmā. i. 9. 31; i. 15. 23; (रामः) तस्मिन्क्षणे विनिर्गत्य मातुरन्तःपुरं ययौ Rāmā. ii. 4. 29; ii. 64. 21; (लक्ष्मणः) ददर्शान्तःपुरं महत् (सुग्रीवस्य) Rāmā. iv. 33. 19; समृद्धं स्त्रीसहस्रेण ...अन्तःपुरं समुत्सृज्य त्वामुपैष्यति रावणः Rāmā. v. 21. 13; (रावणः) जयाशिषा मन्त्रिगणेन पूजितो विवेश सोऽन्तःपुरमृद्धिमन्महत् Rāmā. vi. 27. 22; vi. 98. 1; (सा) धर्षयित्वा हृता राजन्गुप्ताप्यन्तःपुरे तव Rāmā. vii. 25. 27; vii. 35. 56; अयोध्याम् ... तथैवान्तःपुरं मुनिः। ... वसिष्ठः पर्यरक्षत HariVaṁ. 10. 4 = BrahmP. 8. 4; अपुत्रस्य स राज्ञस्तु ववृधेऽन्तःपुरे शिशुः HariVaṁ. 25. 12; BrahmP. 14. 51; परिव्राजिका लब्धविश्वासान्तःपुरे कृतसत्कारा महामात्रमेकैकमुपजपेत् ArthŚā. i. 49. 4 (1. 10); ManuBh. ii. 18. 22 (*on* 7. 54); (राजवास्तुकस्य) पश्चिमार्धे तस्यान्तःपुरम् ArthŚā. iii. 103.7 (10. 1); इन्द्रियार्थैरन्तःपुरे नैव सुतोऽस्य रेमे BuddhaC. 3. 51; राजा ... मध्याह्ने ... भोक्तुमन्तःपुरं विशेत् ManuSm. 7. 216 = SūktiRa. 158. 6; NītiPra. 8. 88; ManuSm. 7. 221; 7. 224; एवमन्तःपुरे ज्ञेयो बाह्यश्चासनतो विधिः NāṭyaŚā. 12. 236; भो वानर ... केन कारणेन धर्षितोऽस्माकमन्तःपुरं प्रविष्टः Abhiṣe. 3. 14 (7); सर्वमन्तःपुरे कथयिष्यामि Avimā. 4. 21 (32); 6. 8 (7); यावदहमपि अन्तःपुरं प्रविश्य देवकीं समाश्वासयामि BālC. 1. 29 (23); अन्तःपुरे ... शोकाश्रुभिर्वसुमती सिषिचे JātaMā. 11. 12 (2. 30); कलत्रावग्रहोपायेनैनामन्तःपुरं प्रवेशयेत् KāmSū. 293. 20 (5. 5); नागरकस्तु सुप्रापमप्यन्तःपुरमपायभूयिष्ठत्वान्न प्रविशेदिति वात्स्यायनः KāmSū. 298. 8 (5. 6); राजकुलचारिण्य एव लक्षण्यान्पुरुषानन्तःपुरं प्रवेशयन्ति KāmSū. 301. 14 (5. 6); भगवान् ...। जाम्बवतीं चान्तःपुरे निवेशयामास ViṣṇuP. iv. 13. 63; v. 27. 21; गन्धमाल्यैस्तथा धूपैः पूज्यमानः स तिष्ठति। अन्तःपुरे (मूषकः) MārkP. 116. 50; 71. 20; ततः संस्थापयामास ... अन्तःपुराणि च VāyuP. i. 8. 96; गत्वा ह्यन्तःपुरं भ्रातः प्रणम्य जगदीश्वरीं। ... यास्यामि BrahmāṇḍP. ii. 41. 37; ii. 32. 17; ii. 41. 49; (बलिः) अन्तःपुरे जुगोपैनं भक्ष्यैर्भोज्यैश्च तर्पयन् BrahmāṇḍP. ii. 74. 67; आयाति स्वसमीपं सा यद्यप्यन्तःपुरं गता LalitāSa. 263; अन्तःपुराद्वा स्वनिवेशनाद्वा ... कुर्यान्नरेन्द्रः प्रथमं प्रयाणम् YogYā. 13.1; अन्तःपुराद्वैशंपायनमादायागच्छेति ... राजा प्रतीहारीमादिदेश Kād. 17. 17; अन्तःपुरं शृङ्गाराभरणानाम् ... दर्पशातमपश्यत् (हस्तिनम्) HarṣaC. 109. 1; सहसैवोत्थितोऽन्तःपुरेऽग्निः Ratnā. 4. 14; राजा ... मन्मथप्रतिमकान्तिरन्तःपुरेष्वरमत AvantiKa. 22. 20; 183. 7; (असौ) न मामन्तःपुरं प्रवेशयति DaśKuC. 134. 15; 76. 1; विधायान्तकसन्मानं सुरेशोऽन्तःपुरं ययौ PadmP. (Ra.) 8. 490; (राजा) निषेवितः ... अन्तःपुरेषु विचरेत् कुब्जकैरातवामनैः NītiSā. 7. 41; (ध्रुवे) तपोवनं गते तस्मिन्प्रविष्टोऽन्तःपुरं मुनिः (नारदः) BhāgP. iv. 8. 63; iv. 12. 16; अन्तःपुरमपि केचिद्दासीभिः कथितसदुपायाः। प्रविशन्ति RatiRaha. 13. 104; सर्वत्रान्तःपुरेऽस्मिन् भवतु कृतपदा कौमुदी वासरेऽपि TāpaVa. 1. 3; स्नात्वा ... अन्तःपुरं प्रविश्य कामतः सुपरीक्षितमन्नमश्नीयात् BālaKrī. i. 188. 19 (*on* 1. 322); कक्षान्तरेष्वन्तर्वंशिकसैन्याधिष्ठितोऽन्तःपुरं प्रविशेत् (राजा) ManuBh. ii. 44. 17 (*on* 7. 153); ii. 66. 27 (*on* 7. 216); अन्तःपुरान्निष्क्रम्यालंकृत आयुधीयं पश्येत् ManuBh. ii. 68. 9 (*on* 7. 222); अन्तःपुरे राजनि राजधान्याम् ... उत्सवोऽयमद्यापि विश्राम्यति न प्रजासु RāghPāṇ. (Dha.) 3. 17; अन्तःपुरं वित्तगृहं परदीत्यं व्रजेन्न हि AgniP. 155. 18; सातवाहनो नाम राजा, तेन प्राकृतभाषात्मकमन्तःपुरे एवेति (प्रवर्तितो नियमः) KāvyMī. 50. 18; राजापि ... तामेवान्वेष्टुमन्तःपुरमाजगाम NalaCam. 3. 5 (3); देवी व्यपास्य शयनं धृतमानतन्तुरन्तःपुरं गतवती ViddhaŚā. 1. 19 = SaraKaṇṭhā. 721. 17; एषा गाधिसुता ...। अन्तःपुरात्समायाता SkandP. vi. 165. 18; नाक्रमेत् ...। अन्तःपुरम् ऋतुगृहम् ViṣṇuDhaP. ii. 89. 19; यद्वयो मत्सदृशा भार्यास्तिष्ठन्त्यन्तःपुरे तव VarāP. 137. 153; कौलीनं प्रविश्यान्तःपुरं नृपः। अनयत् क्षणदाशेषम् BṛKathāŚloSaṁ. 1. 33; नृपतिः ... देवतायतनव्यग्रस्त्रीकमन्तःपुरं ययौ BṛKathāŚloSaṁ. 2. 18; 3. 41; 7. 22; यावदन्तःपुराटव्यां ...। नास्त्यसौ यो न चास्माभिरीक्षितश्चारचक्षुषा BṛKathāŚloSaṁ. 12. 34; 20. 303; 27. 46; अन्तःपुरं अधिरुह्यान्तःपुरम् ... देवीमिदं सदुःखमवदन् TilaMañ. 29. 3; 21. 15; अन्तःपुरे भूमिपतिर्मदान्धः करोति यः संगतिमङ्गनाभिः YaśasCam. ii. 153. 10; i. 595. 6; ii. 288. 21; अन्तःपुरे वर्षवराः ... स्वस्वकार्योपयोगिनः DaśRū. 2. 44; य उक्तो राजदण्डोऽयं तस्येदं स्थानपञ्चकम्। गजो व्याघ्रश्च ... भृङ्गो यथाक्रमम् ... भ्रमरेऽन्तःपुरं कुर्यात् YuktiKa. 37. 12; (मागधी ... अन्तःपुरसमाश्रया) नरेन्द्राणां यदन्तःपुरं तन्निवासिनामिति संबन्धः AbhinBhā. ii. 377. 12 (*on* 17. 51); नरपतिः (दशरथः) ... प्रविश्यान्तःपुरं कान्तां नापश्यत् RāmāMañ. 58. 11; नान्तःपुरेनं वासोभिः ...। भवन्ति पूजिता नार्यः RāmāMañ. 397. 21; वधूलम् स्थितमन्तःपुरे नरम्। आदित्यवर्मा विज्ञाय पश्चात्तापं समाययौ BṛKathāMañ. i. 2. 181; iii. 1. 333; iv. 1. 13; (गुणशर्मा) विवेशान्तःपुरे प्रातर्वीणां शिक्षयितुं स्वयम् BṛKathāMañ. vi. 1. 187; BrahmP. 200. 20; मङ्गलानि विचित्राणि यथोचितमकारयन्। विवेशान्तःपुरे देवी यत्र साधुः BhaviP. 455B. 20 (iii (2). 28. 17); सती ...। विवेशान्तःपुरं देवी यत्र साधुः BhaviP. 455B. 20 (iii (2). 28. 17); भूपकन्या चान्तःपुरात्तु सा ... समाजगाम माता प्रसूरिति BṛDharmaP. i. 37. 2; पद्मावती ...। दौवारिकैर्वेत्रहस्तैः आसितान्तःपुराद्वहिः ŚivaP. ii (1). 3. 44 (40A. 6); बभूवुः DaśāvaC. KalkiP. i. 5. 19; सुन्दरीणां सहस्राणि षोडशान्तःपुरे हरेः। उपर्यन्तःपुरे सा च रत्नमित्यभिरक्ष्यते 8. 195; राज्ञस्तु तनया पाटलीत्यस्ति कन्यका।

KathāSaSāg. i. 3. 58; ii. 5. 60; विधातव्यम् ... [illegible] SamarāSū. 45. 35; आनीयान्तःपुराद् भक्तपानादि प्रतिवासरम्। गुरवे पुष्पचूलादात् PariPar. 6. 149; 3. 244; तरुणो विटः। अन्तःपुरे मदीयां स्त्रीं कटाक्षैः स्प्रष्टुमीक्षते Mānaso. ii. 18. 998; स मन्त्री ...। अन्तःपुरे यथाकामं विजहार तया सह RājTa. (Ka.) 3. 499; देवोऽन्तःपुरमध्यास्ते MudrīKu. 5. 0 (7); अन्तःपुरेषूद्यानेषु च वपुषो लतानां च दुर्लभत्वम् AlaṅkāRa 16 (6); वेसरादिकं पुरं च नगरमन्तःपुरं च अवरोधनम् JñātāDhaṬ. 12B. 5; अन्तःपुरं संप्रविशेन्नियम्य त्वङ्गरक्षकान् VasiS. 33. 59; नन्दो वृद्धगोष्ठीतोऽन्तःपुरमासाद्याह GopāKeCan. 118. 33; EI. i. 25. 4; विमृश्याह नृपो देवीं गच्छान्तःपुरमात्मनः PārśvC. 3. 721; 2. 338; क्षणेन तुमुलो जज्ञे पुरेऽप्यन्तःपुरेऽपि च PrabhāC. 33. 24; 84. 30; (नियुञ्जीत ... भीरूनन्तर्निवेशने) अन्तर्निवेशनेऽन्तःपुरे ManvaVi. 785. 16 (*on* 7. 62), 866. 13 (*on* 7. 224); अन्तःपुरे संगतां कन्यामधिकृत्य कर्तव्या (नाटिका) NāṭaLaRaK. 2751; कालिदासो दासीवेषेणान्तःपुरं प्राप्य लीलादेव्या सह रमते BhojPra. 27. 10; 8. 23; भीमः ... (बकुलदेवीम्) तामन्तःपुरे न्यधात् PrabaCin. 77. 9; 34. 2; KumāPraPra. 37. 30; श्रीगर्दभिल्लो नृपतिस्ततः किं भो रम्यमन्तःपुरमस्य किं वा KālikāKa. 22; उच्छलितोऽन्तःपुरे स्त्रीणां कोलाहलः PrabaK. 10. 15; महीपतिः पुत्त्रमुखं दिदृक्षुः प्राविक्षदन्तःपुरमात्तहर्षः MadhuVi. 2. 24; राजा चान्तःपुरं गत्वा रहस्यचिन्तयत् PuruṣPa. 7. 12; प्रविश्यान्तःपुरे वेश्मन्यङ्गदः AdhyāRā. vi. 10. 24; iv. 5. 50; v. 2. 12; अथ प्रवेशयामास जनकोऽन्तःपुरं शुकम् YogVā. ii. 1. 23; स रेमे कान्तया ...। अन्तःपुरेषु हर्म्येषु YogVā. iii. 16. 17; विदूरथस्ते भर्तैष तनुं त्यक्त्वा रणाङ्गणे। तदेवान्तःपुरं प्राप्य तादृगात्मा भविष्यति YogVā. iii. 45. 1; अन्तःपुरे भार्यादिभिरेकाकी क्रीडेत (राजा) DīpKa. 34. 1 (*on* 1. 329); प्रथमावतीर्णमदनविकारा ... निर्याति नान्तःपुरात् SāhiDa. 108. 11; 565. 1; देवः ...। देदीप्यमानं शरीरं विधायान्तःपुरं गतः SiṁhāDvā. (App.) 243. 74; अन्तःपुरं गत्वा ... पार्वती सम्यगलंक्रियताम् PārvPa. 5. 9 (1); विदर्भभूपालसुतां विलोकितुं विशन्तमन्तःपुरमस्य भूपतेः। ... याहि Nalābhyu. 4. 21; (बालः) प्रच्छन्नमन्तःपुरे प्रहितः PurāPraSaṁ. 13. 10; 6. 24; 10. 12; अन्यदा अन्तःपुरे पुत्री जाता (नरवाहनस्य) PurāPraSaṁ. 109. 3; रामदेवस्य पितृव्यसुता लुखाईराणी अन्तःपुरेऽस्ति PurāPraSaṁ. 112. 17; यावन्मद्यमदप्रमादविवशः सुप्तो जनोऽन्तःपुरे। ... तावदसौ स्मरामयवतां वैद्यः समासाद्यताम् Subhāṣi. 1949; उद्दामाम्बुदगर्हितान्धतमसप्रध्वस्तदिङ्मण्डले ...। कर्णस्य ... अन्तःपुरादायातासि Subhāṣi. 2555; PadyaVe. 831; पर्यस्तहारस्तबकं प्रयान्त्या स्तनावभूतां तरलोत्तरीयौ। अन्तःपुरस्याविशतोऽवनीन्दोः पुरः प्रणीताविव पूर्णकुम्भौ Acyutarā. 12. 29; अन्तःपुरे परपुरुषागमनस्यात्यन्तमसंभावनया क एष मां बोधयतीत्यादावुचित एव त्रासः RasGaṅ. 120. 13; उद्घाटयन्ति ... अन्तःपुरम् ... मयूखाः ŚivLī. 9. 5; 5.58; Gaṅgāva. 8. 88; सुरपतिः ... अन्तःपुरं प्रविश्य ... जजागार तां रजनीम् NīlaVi. 15. 2; 42. 6; देव्या गृहिण्याः स्नेहसर्वस्वभाजनं तदन्तःपुरादेवागच्छामि Jīvān. 24. 8; अश्रान्तमर्पितमना जनकात्मजायां नान्तःपुराद्बहिरुपैति निशाचरेन्द्रः JānaPa. 6. 3; मृगाक्षि ... ममान्तःपुरमलंकुरु KathāK. 148. 9; 129. 7; अन्यायाद्विनिवृत्ता ये ... स्वपन्त्यन्तःपुरे हि ते AlaṅkāMañ. 101. 4; इङ्गितं चेष्टितं यत्नात् ... स्त्रीणामन्तःपुरे च यत्। शृणुयात् ŚukraNī. 1. 336; 4 (5). 71; अन्तःपुरे वर्षवरकिराताः (नायकसहायादयः) SāhiSā. 4. 69; विहरन्वधूभिरन्तःपुरेऽग्निवर्णः। ... ग्रस्तोऽथ यक्ष्मणा UpadeŚ. 51; **1B** inner part of a house अन्तःपुरं ततस्तस्य ब्राह्मणस्य महात्मनः। विवेश कुन्ती त्वरिता MahāBhā. i. 145. 18; पितुरन्तःपुरं दद्यात् KṛṣiPa. 80; **1C** king's (private) palace, royal residence न ह्यतुष्टो जनोऽस्तीह पुरे चान्तःपुरे च ते MahāBhā. iii. 287. 21; अन्तःपुराणि राज्ञाम् ... कारयामास धर्मात्मा MahāBhā. xiv. 86. 15; BrahmP. 47. 40; वास्तुकप्रशस्ते देशे सप्राकारपरिखाद्वारमनेककक्ष्यापरिगतमन्तःपुरं कारयेत् ArthŚā. i. 98. 2 (1. 20); शोकाग्निना ... निःश्वासधूमेन ... दह्यमानमन्तःपुरं चैव पुरं च कृत्स्नम् BuddhaC. 9. 29; VetāPañ. (Jam.) 88. 21; VāyuP. i. 8. 96; **1D** inner part of the city, interior of the city (वीरः ... पूर्वं कृत्वा विधानं च यात्रायां नगरे तथा) अन्तःपुरे च राष्ट्रे च MahāBhā. xii. 159* (1); वसिष्ठः ... पुरीं समतिक्रम्य ... ददर्शान्तःपुरं श्रेष्ठम् Rāmā. ii. App. I. 10 (11); ii. App. I. 10 (14); iii. 782* (1); अयं परिभवो भूयः पुरस्यान्तःपुरस्य च। श्रीमतो राक्षसेन्द्रस्य वानरेन्द्रप्रधर्षणम् Rāmā. vi. 8. 7; ततोऽस्त्राग्निस्फुरद्धूमपटलैः शकलीकृतम्। बभूव च्छन्नमम्भोधेरन्तःपुरम् BrahmāṇḍP. ii. 57. 60; (यन्त्रम्) अन्तःपुरे नगर्यास्तु दिक्षु मध्ये च तत् खनेत् TantrRā. 10. 62; अन्तःपुरं जनपदामरधाममार्गैराचक्ष्महे नगरसंप्रविभागमत्र SamarāSū. 9. 54 ½; 38. 9; अन्तःपुरे पुरंध्रीणां रम्याणि भवनानि च। ... भस्मसात्कुरुते यत्तु स दण्डः स्थानदाहकः Mānaso. ii. 20. 1076; लोकानां प्रीतिकर एव अन्तःपुरे वा गृहे वा ... प्रवेशो यस्य सः AupaSūṬ. 190. 3; **1E** inside or interior of the palace (नियुञ्जीत ... भीरूनन्तर्निवेशने) अन्तर्निवेशने अन्तःपुरभोजनशय्यास्त्रीगृहाणि ManuBh. ii. 21. 11 (*on* 7. 62); अन्तःपुरे यदुत्पन्नं रत्नं तस्य क ईश्वरः Pa[illegible] ViMIKa.

[illegible] **1F** [illegible]nctorum or inner chamber (where the image of a deity is installed) जलमेत्य किंचिदन्तःपुरं भगवतोऽपनुनोद मृत्साम् ŚaṅkaDigVi. (Mā.) 5. 76; **1G** living place or covert सर्वासां वनदेवीनामन्तःपुरमिव ... कदम्बवृक्षम् ... ददर्श YogVā. iv. 49. 20; **2A** inmates or royal ladies in the inner apartment or harem तदवस्थां तु तां (दमयन्तीम्) दृष्ट्वा सर्वमन्तःपुरं तदा। ... प्ररुरोद MahāBhā. iii. 67. 3; अन्तःपुराणां सर्वेषां भृत्यानां चैव सर्वशः ... सर्वं वेद कृताकृतम् MahāBhā. iii. 222. 50; गान्धारी ...। निःसंज्ञा पतिता भूमौ सर्वाण्यन्तःपुराणि च MahāBhā. viii. 3. 4; श्रुत्वा ... निर्याणं धृतराष्ट्रस्य ...। अन्तःपुराणां च तदा महानार्तस्वरोऽभवत् MahāBhā. xv. 45. 40; अन्तःपुराणि सर्वाणि शान्तां दृष्ट्वा तथागताम्। ... प्रीत्यानन्दमुपागमन् Rāmā. i. 10. 28; हा रामेति जनाः केचिद् राममातेति चापरे। अन्तःपुरं समृद्धं च क्रोशन्तं पर्यदेवयन् Rāmā. ii. 35. 28; अन्तःपुराणि सर्वाणि रुदमानानि ...। पृष्ठतोऽनुययुः Rāmā. vi. App. I. 69 (17); हते भीमे ... उपनिन्युः ... रत्नान्यन्तःपुराणि च। दानवाः HariVaṁ. 92. 8; किं हि वक्ष्यति मां राजा त्वदृते नगरं गतम्। वक्ष्याम्युचितदर्शित्वात् किं तवान्तःपुराणि वा BuddhaC. 6. 37; 1. 23; इष्टमन्तःपुरं सर्वं मातृवत् पूजितं मया PañcRā. 2. 71; महायत्नः कुमाराणामन्तःपुरस्य रक्षणे। ... कुर्यात् BṛParāSm. 12. 13; अन्तःपुराणां च वृत्तमेतेष्वेव प्रकरणेषु लक्षयेत् KāmSū. 251. 12 (4. 2) (JayaMa. अन्तःपुराणां चेति तत्स्थस्त्रीणामेवाभिधानम्); राजा ... अलंकृतश्च ... सर्वाण्यन्तःपुराणि ... पश्येत् KāmSū. 251. 18 (4. 2); स्वैरेव पुत्रैरन्तःपुराणि कामचारैर्जननीवर्जमुपयुज्यन्ते वैदर्भकाणाम् KāmSū. 301. 17 (5. 6); 294. 21 (5. 5); 296. 5 (5. 6); वैवाहिकैः कौतुकसंविधानैः ... आसीत् पुरं सानुमतः ... अन्तःपुरं चैककुलोपमेयम् KumāSaṁ. 7. 2; चपलोऽयं बटुः कदाचिदिमामस्मत्प्रार्थनामन्तःपुरेभ्यो निवेदयेत् Śāk. 2. 18 (10); (दुःष्यन्तः) दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यः Śāk. 6. 5 = SaraKaṇṭhā. 632. 9; अन्तःपुराणां मञ्चाश्च तथान्ये परिकल्पिताः ViṣṇuP. v. 20. 27; BrahmP. 193. 26; अन्तःपुराण्यपि ... तस्याभिलषितम् अन्ववर्तन्त HarṣaC. 152. 2; अन्तःपुराणां विहितव्यवस्थः ... सर्वां नृपस्यानुकरोमि वृत्तिम् Nāgā. 4.1; PriyDa. 3. 3; अस्याः सर्वाण्यन्तःपुराण्याहूय सद्य एव सेवां दत्तवान् DaśKuC. 78. 4; तौ वारयितुमुद्युक्ता वज्रजङ्घस्य सूनवः। सर्वमन्तःपुरं चैव PadmP. (Ra.) 101. 30; प्रवेशितस्त्वयात्मायं यदैवानर्थसंकटे। तदैवान्तःपुरमिदं तव स्वीकृतमाधिना RāmC. 24. 108; अन्तःपुरं कृतानन्दं संप्रापद्येलनान्तिकम् BṛKathāK. 10. 99; 19. 48; महीपतिः ... पौरमन्तःपुरं चैव दानादिभिरमानयत् BṛKathāŚloSaṁ. 5. 82; क्षुद्रगणिकागणमप्यन्तःपुरमिति ... चिन्तयद्भिः ग्रामेयकैः TilaMañ. 118. 21; हन्ति ... अन्तःपुरं तथा वाली AśvaCi. 4. 32; स्वां पुरीं स विसिष्माय राजा त्वन्तःपुरं तथा BrahmP. 16. 22; अनङ्गप्रभा ...। राज्ञो हरिवरस्यान्तःपुराणां प्राप मुख्यताम् KathāSaSāg. ix. 2. 263; राजा ... बहुदासीपरीवारम् ... अन्तःपुरं सहाचालीद्देहच्छायेव चक्रिणः TriṣaŚaPuC. ii. 4. 40; उग्रसेनस्य पुत्री ... सार्धमन्तःपुरेण। तत्रायाता क्रीडितुम् NemiNir. 11. 1; (नृत्यशालायाम्) वामतोऽन्तःपुराणि स्युः (सभापतेः) SaṁgīRa. iv. 395. 4 (7. 1342); तस्याः पादद्वयाङ्गुष्ठसंपदः पुरतस्तव। इदमन्तःपुरं सर्वमङ्गारादपि हीयते MalliC. 5. 139; प्रभोः प्रमाणमादेश इति ... श्रुतमन्तःपुरेण तत् SamarāSaṁ. 4. 501; 1. 116; (कोऽपि) अन्तःपुराणाम् आभरणानि ... स्वर्णकारपार्श्वात् कारयति PurāPraSaṁ. 113. 20; अन्तःपुरस्य वृत्तिर्लक्ष्यैतेष्वेव तु प्रकारेषु KandaCū. iv. 2. 49; **2B** queen सर्वैरन्तःपुरैः सार्धं प्रीत्या प्राप्तेषु राजसु। यज्ञो दुर्योधनस्य ... वर्तते PañcRā. 1. 2; तन्मध्ये कस्यचिद्राज्ञोऽन्तःपुरम् ... जलक्रीडां करोति PañcT. 1. 62 (16) (3. 5); Pañcā. 39. 21; देवि, तव कारणात्सर्वमन्तःपुरं त्यजामि ĀścaCū. 5. 27 (5); यदीदृशमिदं रूपं स्याद्वनेऽन्तःपुरेण किम् RāghPāṇ. (Dha.) 7. 86; सः ... स्थानं कुब्जाम्रकं गतः। अन्तःपुरेण सहितः VarāP. 126. 187; (राजा आह) सहान्तःपुरेण ... मकरध्वजपूजार्थं व्रजिष्यामि YaśasCam. ii. 249. 14; गङ्गाकूले ... शर्यातिरायातः स्नातुमन्तःपुरैः सह BhaviP. 45B. 27 (i. 19. 5); अन्तःपुराणि सर्वाणि रुमा तारा तथैव च। ... साधु साध्विति चाब्रुवन् PadmP. v. 35. 41; तस्यैकाभूदनिर्वृतिः। नोदपद्यत यत्पुत्रो बहुष्वन्तःपुरेष्वपि KathāSaSāg. xii. 26. 6; करितुरगसमृद्धां सार्धमन्तःपुरेण क्षितिपतिरथ सर्वां शत्रुलक्ष्मीं गृहीत्वा। ... राजधानीं विवेश VikraDeC. 15. 86; (नरेश्वरः) अन्तःपुरैः कुमारैश्च ...। समन्वितः ... सहयातान् ... यथास्थानं निवेशयेत् Mānaso. iv. 4. 798; iv. 15. 1539; नृपोऽपि ... मातृगृहाणि गन्तुं कथंचिदन्तःपुरमादिदेश Surath. 2.9; वसन्तोत्सवे राजान्तःपुरेण सह आरामे क्रीडनाय गतः VetāPañ. (Śi.) 29. 44; (राजोवाच) स्वामिनी च भव मम चैवान्तःपुराणाम् BallāC. 24. 5; 102. 4; (चित्रसेनः) पुत्रस्य पुरस्यान्तःपुरस्य च ... पप्रच्छ कुशलं नृपः CitraPaC. 499; **2C** supervisor of the harem, chamberlain अन्तःपुरपुरद्वारद्रव्यधान्यपरिग्रहान्। दहेयुस्तांश्च हन्युर्वा ArthŚā. iii. 162. 8 (12. 2) (comm. तत्तत्पालकान्); **2Di** wife or consort पुरारातेरन्तःपुरमसि SaundL. 95; [illegible]न्तःपुरं दिशतु मङ्गलमादराद् वः ŚāraTi. 1. 2; छन्दःकन्दलमन्दिरमन्तःपुरमैन्दुशेखरं वन्दे LalitāStaRa. 182; महायोगपीठे निषण्णां

Kanṭhā. 681. 14; SaduktiKa. 121. 28; SāhiDa. 99. 1; चन्द्रोदयेऽन्तःपुरसुन्दरीणाम् ...। शृङ्गारलीलासमयं विलोक्य क्षणं प्रदध्यौ नरनाथसूनुः DaśāvaC. 9. 29; द्वेषेण चान्तःपुरसुन्दरीषु। प्रच्छादनार्थं विहितक्षणोऽपि क्षोणीपतिस्ताडितडिण्डिमोऽभूत् VikraDeC. 9. 13; चचार कर्णद्वयसानुरागे चित्ते यदन्तःपुरसुन्दरीणाम्। स तेन संरक्त इवाबभासे Gaṅgāva. 8. 68.

**अन्तःपुरसुन्दरीजन** (antaḥpura-sundarījana) *m.* beautiful womenfolk in the harem सुरमादेवी रमैवार्थतो नाम्नान्तःपुरसुन्दरीजनशिरोरत्नाङ्कुरश्रीरियम् EI. vi. 201. 10; अन्तःपुरसुन्दरीजनगुणे न्यायाधिकं(?न्यूनाधिकं) ध्यायता देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थिता नाडिकाः BhojPra. 70. 10.

**अन्तःपुरसुभ्रू** (antaḥpura-subhrū) *f.* charming lady (*lit.* woman having beautiful eyebrows) in the harem तस्यान्तःपुरसुभ्रुवामुदचरन् हाकारगर्भा गिरः Ekāva. 6.1 (12) (153.4)

**अन्तःपुरसौध** (antaḥpura-saudha) *m.* house of harem कोऽप्यन्तःपुरसक्तेषु (v. l. अन्तःपुरसौधेषु) बभूव प्रचुरोत्सवः BṛKathāMañ. xv. 1. 139.

**अन्तःपुरसौधपृष्ठ** (antaḥpurasaudha-pṛṣṭha) *n.* flat roof of house of the harem स्थितं ददर्श स्वयमेव देवी कपिं तमन्तःपुरसौधपृष्ठे RāmC. 22. 41.

**अन्तःपुरसौधशृङ्ग** (antaḥpurasaudha-śṛṅga) *n.* top or turret of house of the harem अन्येद्युरन्तःपुरसौधशृङ्गस्थितं समेत्य प्रणिधिर्दशास्यम्। सुग्रीवसैन्यार्णवमध्यचारी जगाद DaśāvaC. 7. 206.

**अन्तःपुरस्त्री** (antaḥpura-strī) *f.* A lady or woman in the harem बीभत्सुरपि गीतेन सुनृत्तेन च पाण्डवः। विराटं तोषयामास सर्वाश्चान्तःपुरस्त्रियः MahāBhā. iv. 12. 29; तेन शब्देन संभ्रान्ताः सर्वशोऽन्तःपुरस्त्रियः Rāmā. ii. 1512* (5); अभूदन्तःपुरस्त्रीणां महानाक्रन्दितध्वनिः PadmP. (Ra.) 113. 15; अन्तःपुरस्त्रियोऽपृच्छ-द्विमना इव वेदिषत् BhāgP. iv. 26. 14; अन्तःपुरिका अन्तःपुरस्त्रियः JayaMa. 290. 15 (*on* 5. 5); अभ्येत्य पितरं वीरः प्रलापमुखराननम्। ददर्शान्तःपुरस्त्रीभिर्वृतं व्यथितमानसम् RāmāMañ. 71. 26; सः ... भूभृता ...। संमान्यान्तःपुरस्त्रीणां नाट्याचार्यो व्यधीयत KathāSaSāg. ix. 2. 266; विलापोऽन्तःपुरस्त्रीणाम् ... हृदयाकम्पजनकः TriṣaŚaPuC. ii. 6. 10; एवमन्तःपुरस्त्रीणां रुदितैः करुणस्वरैः। वनान्यपि प्रतिरवै रुरुदुः सह बन्धुवत् TriṣaŚaPuC. ii. 6. 23; (पार्थिवः) आत्मरक्षार्थं चान्तःपुरस्त्रीणां चेष्टितं सखीदास्यादिना निरूपयेत् ManvaMu. 274. 6 (*on* 7. 153); अपराह्णे स्वैरं यथेष्टं विहारी अन्तःपुरस्त्रीभिस्सह एकाकी क्रीडायुक्तः स्यात् VīraMi. 363. 5 (*on* 1. 329); B lady attendant or maid servant in the harem स्वयंप्रभा। उवाचेन्दुमतीं नाम वृद्धामन्तःपुरस्त्रियम् KathāSaSāg. xvii. 5. 140; C queen in the harem भूमिपालस्य भूयस्योऽन्तःपुरस्त्रियः। बीजाश्वस्येव वडवास्तास्ताः समभवन् प्रियाः RājTa. (Ka.) 4. 396; कदा मे वायवः ...। पास्यन्त्यन्तःपुरस्त्रीणां सुरतश्रमसीकरान् YogVā. iii. 19. 12.

**अन्तःपुरस्त्रीकदम्बक** (antaḥpurastrī-kadambaka) *n.* group of ladies in the harem शनैः शनैः पुनरप्यतिक्रामति काले ... चारित्र इवान्तःपुरस्त्रीकदम्बकेन पाल्यमाने ... हर्षे षष्ठं वर्षमवतरति च राज्यवर्धने देवी यशोमती गर्भमाधत्त HarṣaC. 191.13.

**अन्तःपुरस्त्रीकठिनकुच** (antaḥpurastrī-kaṭhinakuca) *m.* hard breast of the woman in the harem मा भूदन्तःपुरस्त्रीकठिनकुचभिदाकारिणी रागभाक्त्वात्सक्तेत-स्मिन्नखाली JinaŚ. 2. 15.

**अन्तःपुरस्त्रीदिदृक्षा** (antaḥpurastrī-didṛkṣā) *f.* desire to see the women in the harem ते ययुः। पुनरागममिच्छन्तोऽन्तःपुरस्त्रीदिदृक्षया PariPar. 8.426.

**अन्तःपुरस्त्रीवर्ग** (antaḥpurastrī-varga) *m.* group of women in the harem द्विपृष्ठस्योपरिष्टाच्च पुष्पवृष्टिः पपात खात्। तारकस्योपरि त्वन्तःपुरस्त्रीवर्गहृज्जलम् TriṣaŚaPuC. iv. 2. 274.

**अन्तःपुरस्थ** (antaḥpura-stha) *adj.* [*f.* - ā] Ai confined to the harem बालस्यान्तःपुरस्थस्य महत्सङ्गो दुरन्वयः BhāgP. vii. 6. 30; अन्तःपुरस्था च तदा प्रसूतिः सती प्रसूर्ज्ञानवती विमोहा BṛDharmaP. i. 37. 79; Aii staying in the harem 'मयापि चैनाम्' ... इत्यनेन सागरिकाया अन्तःपुरस्थाया वत्सराजस्य सुखेन दर्शनादिप्रयोजनावधारणात् ... युक्तिः Avalo. 8. 12 (*on* 1. 28); (used as noun) (one) who is staying in the interior of the house सर्वसंसारदुःखानां तृष्णैका दीर्घदुःखदा। अन्तःपुरस्थमपि या योजयत्यतिसंकटे MahāU. 3 (25); YogVā. i. 17. 32; B inmate in the harem विख्याता विज्ञाने यस्मिंस्तद्दर्शनार्थमाहूता। अन्तःपुरस्थया किल दासी तुल्या तु पूर्वेण KandaCū. v. 5. 25.

**अन्तःपुरस्थान** (antaḥpura-sthāna) *n.* house of harem इदमन्तःपुरस्थानं रुद्रायतनम् MatsyaP. 130.4; वातेहितांबरव्याजादुल्काण्डमदर्शयत्। मारस्यान्तःपुरस्थानं लावण्यरससनिर्भरम् PadmP. (Ra.) 39. 189; वा(यौ ?यु)सुग्रीवपदयोर्गन्धर्वस्य च बाह्यतः। कुर्यादन्तःपुरस्थानं प्राकारवलयावृतम् SamarāSū. 15. 25.

**अन्तःपुरस्थित** (antaḥpura-sthita) *adj.* being or staying in the harem नारदः ...। सहसैव कदाचिन्मामागादन्तःपुरस्थितम् PāṇḍaC. 17. 145; धात्री ... नृपमन्तःपुरस्थितम्। प्रणम्य कन्यावृत्तान्तं तदग्रेऽकथयच्छनैः KathāKau. 3. 80.

**अन्तःपुरस्वैरविहार** (antaḥpura-svairavihāra) *m.* unrestricted or free sporting or playing in the harem अन्तःपुरस्वैरविहारभाजे निवेदयावो रणकर्म राज्ञे AdbhuDa. 7. 37.

**अन्तःपुरहित** (antaḥpura-hita) *n.* welfare or benefit of the inmates in the harem शान्ता पतिव्रता धीरा अन्तःपुरहिते रता। एभिर्गुणैस्तु संयुक्ता महादेवी NāṭyaŚā. 24. 35.

**अन्तःपुरहिता** (antaḥpura-hitā) *adj.* (*f.*) favourable to, i. e. caring for the inmates in the harem अन्तःपुरहिता साध्वी शान्तिस्वस्त्ययनैर्युता। ... महादेवी पतिव्रता BhāvPra. (Śā.) 290. 17 (10)

**अन्तःपुराकाश** (antaḥpurākāśa) *m.* space in the inner part of the city इहैवान्तःपुराकाशे तस्मिन्नेव पुरे नृपः। संपन्नो वसुधापीठे YogVā. iii. 27. 15.

**अन्तःपुराक्रन्द** (antaḥpurākranda) *m.* lamentation of the women in the harem किष्किन्धः ... शुश्रावान्तःपुराक्रन्दमन्धकध्वंसहेतुकम् PadmP. (Ra.) 6. 471.

**अन्तःपुराग्निसंभ्रम** (antaḥpurāgni-sambhrama) *m.* panic or chaos caused by the fire in the harem अथ समवकारः। ... तस्मिन् त्रयो विद्रवाः। अग्निसमीर-कृतः। युद्धकृतः। पुरोपरोधश्च। तत्राद्यः पलित्वङ्के। अन्तःपुराग्निसंभ्रमः NāṭaLaRaK. 2814.

**अन्तःपुराङ्गना** (antaḥpurāṅganā) *f.* woman or lady in the harem सर्वाश्चान्तः-पुराङ्गनाः। चक्रुर्मुग्ध(?चुक्रुशुर्म)दनोद्यानसंभोगस्मरणाकुलाः RāmāMañ. 393. 17.

**अन्तःपुराजिर** (antaḥpurājira) *n.* courtyard, i. e. boundary of the harem (शुकम्) ततः प्रवेशयामास जनकोऽन्तःपुराजिरे MahāU. 2 (24); रमते धीर्यथाप्राप्ते साध्वीवान्तःपुराजिरे MahāU. 4 (38); YogVā. ii. 18. 26; द्विधा भग्नं धनुर्दृष्ट्वा ... विस्मयं लेभिरे सीतामातरोऽन्तःपुराजिरे AdhyāRā. i. 6. 28.

**अन्तःपुरादि** (antaḥpurādi) *adj.* harem etc. अन्तर्निवेशने भोजनशयन-गृहान्तःपुरादौ भीरूंश्रियुञ्जीत ManvaMu. 258. 14 (*on* 7. 62); धर्मकोशहस्त्यश्वादि-स्थानान्तःपुरादिषु अध्यक्षान् अधिकारिणः प्रकुर्यात् VīraMi. 358. 23 (*on* 1. 322); सुस्वान्तलोकविश्वस्ता योज्यास्त्वन्तःपुरादिषु ŚukraNī. 4 (7). 396.

**अन्तःपुरादिक** (antaḥpurādi-ka) *adj.* housewife etc. ते सर्वे सर्वमन्तःपुरा-दिकम्। आदाय दीनवदनाः प्रत्ययोध्यं प्रतस्थिरे TriṣaŚaPuC. ii. 6.38.

**अन्तःपुरादिसंबन्ध** (antaḥpurādi-sambandha) *m.* connection with the harem etc. लक्ष्यते नाटिका ...। नायिका अन्तःपुरादिसंबन्धादासन्ना श्रुतिदर्शनैः DaśRū. 3. 47.

**अन्तःपुराधिकृत्** (antaḥpurādhikṛt) *m.* supervisor or superintendent of the harem अन्तर्वेवशिको(?अन्तर्वेशिको)ऽन्तःपुराधिकृत् PañcTaPra. 3. 7.

**अन्तःपुराधिकृत** (antaḥpurādhikṛta) *adj.* supervising or superintending the harem स्वयमेवोपकल्पितमावासस्थानमन्तःपुराधिकृतः सिंहलको निवेदयिष्यति KaumuMa. 1. 15 (21); अन्तर्वेवशिको(?अन्तर्वेशिको)ऽन्तःपुराधिकृत् अन्तःपुराधिकृतः PañcTaPra. 3.7.

**अन्तःपुराधिप** (antaḥpurādhipa) *m.* A chief or superintendent of the harem, i.e. chamberlain (ताराम्) तां तथा शोकविवशां क्रोशन्तीं करुणस्वनाम्। सपत्नीभिर्वृतां वृद्धः प्रोवाचान्तःपुराधिपः RāmāMañ. 186. 18; हंसावली ... कम्पशालिनी। राज्ञे निवेदिता शङ्काकुलैरन्तःपुराधिपैः BṛKathāMañ. ix. 1. 855; xiv. 1. 281; सोऽन्येद्युरास्थानेऽन्तःपुराधिपम्। सुरक्षितं तमाहूय कृतकोपः समभ्यधात् KathāSaSāg. vii. 5. 33; B guard or attendant of the harem अन्तःपुराधिपाः सर्वे पिष्टाः शत्रुभिरुद्धतैः YogVā. iii. 44. 7.

**अन्तःपुराधिपत्य** (antaḥpurādhipatya) *n.* headship of or control over the harem सर्वान् दानेन ... सर्वकामानवाप्नोति शय्यासनदानादन्तःपुराधिपत्यम् VāsiDS. 29. 12.

**अन्तःपुराधिष्ठान** (antaḥpurādhiṣṭhāna) *n.* abode in the form of the harem राजा ... अन्तःपुराधिष्ठानमिव मन्मथस्य ... विलासोद्यानं ददर्श UdaySuKa. 47. 5.

**अन्तःपुराध्यक्ष** (antaḥpurādhyakṣa) *m.* superintendent of the harem, chamberlain राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते MatsyaP. 215. 42; YuktiKa. 4. 2; VīraMi. (Rājanīti.) 184. 19; VīraMi. (Lakṣaṇa.) 222. 6; वृद्धश्चान्तःपुराध्यक्षः पञ्चाशद्वार्षिकाः स्त्रियः। ... चरेयुः सर्वकर्मसु AgniP. 220. 9; ज्योतिर्ज्ञान्तःपुराध्यक्ष-बलाध्यक्षादिकं क्रमात्। पुनः पुनः परीक्ष्यैव स्वस्वकार्ये नियोजयेत् YuktiKa. 2. 16; आयर्यो स तथैव प्रागयशोलेखया मृषा। दूषितोऽन्तःपुराध्यक्षो भ्रान्ततीर्थः सुरक्षितः KathāSaSāg. vii. 5. 224 [Kośas give *antaḥpurādhyakṣa* as the meaning of the following words: *antarvaṃśika*, AbhidhāCin. 726; ParaNā. 2334; *avarodhika*, AbhidhāCin. 726; ParaNā. 2334; KalpaK. 90.18;

*antarveśika*, KalpaK. 90. 18; *kañcukin*, ŚabdaRaSaK. 203. 1; MediK. 101. 74]

**अन्तःपुरानुगम** (antaḥpurānugama) *m.* approach or access to the harem स्थिरप्रकृतिः क्षोणीपतिः ... विजयशेखरं नाम करिणमारुह्यान्तःपुरानुगमग्राह्यः ... कथां प्रथयामास YaśasCam. ii. 317. 17.

**अन्तःपुरानुबन्ध** (antaḥpurānubandha) *adj.* followed by the queens अयमत्रभवान् धृतराष्ट्रः गान्धारी च दुर्जयेनादेशितमार्गोऽन्तःपुरानुबन्धः शोकाभिभूतहृदयच-कितगतिरित एवाभिवर्तते ŪruBha. 1. 35 (5)

**अन्तःपुरान्तर्** (antaḥpurāntar) *adv.* inside the harem राज्ञी ललिताङ्गं यदि तद्रूपमोहिता। चेट्या प्रवेशयेदन्तःपुरान्तः प्रविशेत् स किम् PariPar. 3. 273; अन्तःपुरान्तर्हरिणेक्षणासु त्रिहायणीनामपि दीव्यमानान्। विलोक्य विद्याविभवानजस्रं वशंवदा यस्य वदन्ति वाणीम् (रघुनाथस्य) Raghunā. 3. 20.

**अन्तःपुरान्तर** (antaḥpurāntara) *n.* interior of the harem स तामन्तः-पुरान्तरम्। प्रावेशयद्राजसुताम् KathāSaSāg. iii. 4. 185; देव देवी सहास्माभिः पलाया(?य्या)न्तःपुरान्तरात्। शरणं देवमायाता YogVā. iii. 44. 5; [Loc.] inside the harem तान्सिद्धसर्षपान् प्राप्य राजपुत्रीं विहाय सा। नीत्वा विदूषकः क्षिप्रं चिक्षेपान्तःपुरान्तरे BṛKathāMañ. iii. 1. 224; (नृपतिः) सिंहासनसमासीनः संतोष्य वचनैः शुभैः। विसृज्य सैनिकान् सर्वान् जगामान्तःपुरान्तरे CitraPaC.505.

**अन्तःपुरान्तस्थ** (antaḥpurānta-stha) *adj.* staying inside the harem विभीषणः ...। ददर्शान्तःपुरान्तस्थं व्यक्तं दशरथं विभीः PadmP. (Ra.) 23. 53.

**अन्तःपुरान्तिक** (antaḥpurāntika) *n.* [Loc.] near the harem (नापितः) विचिन्त्येत्यवदद्युक्ति नृपस्यान्तःपुरान्तिके। हस्तपादशिरःखण्डान् कांश्चित् क्षिपतु पौरुषान् BṛKathāMañ. vii. 1. 439; शुश्राव राजतनयस्तारमन्तःपुरान्तिके। अकाण्डे करुणारावम् BṛKathāMañ. viii. 1. 70.

**अन्तःपुराभिमुखम्** (antaḥpurābhimukham) *adv.* in front of or towards the harem चेलुरन्तःपुराभिमुखमखिलानि विद्याशुभ्रशालान्तेवासिमण्डलानि TilaMañ. 76.17.

**अन्तःपुराभ्यन्तर** (antaḥpurābhyantara) *n.* interior of the harem अन्तःपुरा-भ्यन्तरमेत्य सोऽभूद्विभूतिभोगे शिथिलाभिलाषः DaśāvaC. 9. 20.

**अन्तःपुराभ्यन्तरस्थ** (antaḥpurābhyantara-stha) *adj.* situated in the interior of the harem अन्तःपुराभ्यन्तरस्थे ललिते सूतिकागृहे ...। राजसा ... सुषुवे सुतम् ParamāKā. 181. 65.

**अन्तःपुरामात्य** (antaḥpurāmātya) *m.* attendant (*lit.* companion) in the harem नीचैरन्तःपुरामात्याः शुचयश्चित्तवेदिनः। शस्त्राग्निविषवर्जं हि नर्मयेयुर्महीपतिम् NītiSā. 7. 42 (comm. वर्षवरादयः)

**अन्तःपुराम्भोजखण्ड** (antaḥpurāmbhoja-khaṇḍa) *m., n.* part, i.e. portion of lotuses in the form of the harem ययावन्तःपुराम्भोजखण्डं रावणवारणः PadmP. (Ra.) 72. 70.

**अन्तःपुराम्भोधि** (antaḥpurāmbhodhi) *m.* ocean in the form of the harem (अनङ्गकुसुमाम्) चान्दनेन द्रवेणैतां सिच्यमानां क्रियोज्झिताम्। विलोक्यान्तःपुराम्भोधिः परमं क्षोभमागतः PadmP. (Ra.) 49. 12.

**अन्तःपुरायुतोपेत** (antaḥpurāyutopeta) *adj.* consisting of ten thousand king's (private) palaces बभूव नृपतिः पूर्वं विदर्भायां विदूरथः। सोऽन्तःपुरायुतोपेतं चक्रे राज्यमकण्टकम् SkandP. v (2). 53. 2.

**अन्तःपुरारक्षपरिक्षिप्त** (antaḥpurārakṣa-parikṣipta) *adj.* thrown out over the protecting wall of the inner part of the city येन चान्तःपुरारक्षपरिक्षिप्तेन लीलया। वप्रप्रातकारपरिखाः शतकृत्वो विलङ्घिताः। सोऽयम् ... पादो मे BṛKathāŚloSaṁ.20.63.

**अन्तःपुरालय** (antaḥpurālaya) *adj.* (used as noun) (one who is an) inmate in the harem (*lit.* having harem as the abode) परस्परस्य कार्याणि ज्ञात्वा चान्तःपुरालयाः। एककार्यास्ततः कुर्युः KāmSū. 300. 20 (5. 6)

**अन्तःपुरालय** (antaḥpurālaya) *m.* house of the harem इत्युक्त्वा प्रययौ स्त्रीभी रावणोऽन्तःपुरालयम् AdhyāRā. v. 2. 43.

**अन्तःपुरावचर** (antaḥpurāvacara) *m.* guardian of the harem स राजा ... सकञ्चुकैर्वेत्रदण्डपाणिभिरन्तःपुरावचरैः ... तद्वनमनुविचचार JātaMā. 185. 24 (28.29(7))

**अन्तःपुरावली** (antaḥpurāvalī) *f.* row or series of harems नानारत्नमयीं हेमहर्म्यामन्तःपुरावलीम्। दिव्यामदर्शयत्तस्या दर्पान्धो दशकन्धरः RāmāMañ. 152.9.

**अन्तःपुरावृता** (antaḥpurāvṛtā) *adj.* (*f.*) surrounded by the inmates in the harem दशास्यभवने मासान्बहूनन्तःपुरावृता। स्थिता (वैदेही) PadmP. (Ra.) 104. 65.

**अन्तःपुराश्रय** (antaḥpurāśraya) *m.* resort in the harem नादृष्ट्वा विहितं मन्ये प्राहेत्यन्तःपुराश्रयात् BṛKathāMañ. i. 2. 161.

**अन्तःपुराश्रय** (antaḥpurāśraya) *adj.* (used as noun) (one) who is staying in the harem ततो मासद्वये जाते विज्ञायान्तःपुराश्रयैः। क्रुद्धो मानसवेगस्तमायधी युद्धदुर्मदः BṛKathāMañ. xiii. 1. 119.

**अन्तःपुराश्रित** (antaḥpurāśrita) *adj.* (used as noun) (one who is a) resident of the harem स्यादन्तर्वेशिकश्चावरोधिकोऽन्तःपुराश्रिते ŚabdaRaSaK. 46. 3.

**अन्तःपुरिक** (antaḥpur-ika) *m.* [SiddhaHe. vi. 3. 140] **A** inmate in the harem अयम् ... अस्मत्प्रार्थनाम् अन्तःपुरेभ्यो(v.l. अन्तःपुरिकेभ्यो) निवेदयेत् Śāk. 2. 18 (9); **B** superintendent of the harem, chamberlain राजराज्ञीयुवराज°... °अंतःपुरिकदूत° ... °पुरुषान्नाज्ञापयति EI. xiv. 198. 12; गोविन्दचंद्रदेवः ... राजराज्ञीयुवराज°... °अन्तःपुरि[क*]°...°पुरुषान् समाज्ञापयति EI. iv. 102. 14; iv. 105. 13; xviii. 221. 16; xviii. 226. 15; iv. 110. 11; iv. 101. 15; xix. 293. 12; xiii. 297. 13; iv. 112. 13; iv. 114. 17; iv. 113. 15; iv. 115. 17; v. 116. 13; श्रीवत्सराजदेय(व): ... अंतःपुरिकदूत°...°गोकुलाधिकारिभूभशान् (Read °कारिपुरुषान्) वा(बो)धयति EI. iv. 132. 15; विजयचन्द्रदेवः ... °अन्तःपुरि[क] [दू]त° ... °गोकुलाधिकारिपुरु[षा] ना[ज्ञा]पयति EI. iv. 119. 15; iv. 121. 20; iv. 122. 19.

**अन्तःपुरिक** (antaḥpur-ika) *adj.* [*f.* - ā] **1A** (inmate) belonging to the harem अन्तःपुरिका दासी किमपि क्रेतुमागता BṛKathāŚloSaṁ. 26. 28; यदीश्वराणां परभवनप्रवेशो नास्ति तथान्तःपुरिकाणां नागरकाणां चान्तःपुरप्रवेशः JayaMa. 296. 2 (*on* 5. 6); (अन्तःपुरहिते रता) अन्तःपुरिके बाह्ये च वर्गे अन्तःपुराय हितं कौशल्यसंपादनम् AbhinBhā. iii. 254. 17 (*on* 24. 35); **1B** (lady) belonging to the harem अन्तःपुरालया अन्तःपुरिकाः JayaMa. 301. 7 (*on* 5. 6); तस्मिन्नहनि देवोऽपि सहान्तःपुरिकैर्जनैः। अनुभूतज(?य ज)लक्रीडाम् BhaviP. 126A. 10 (i. 73. 17); किमेतत् कस्याश्चिदपि हस्तादादाय सानन्दम् आलोकयत्यन्तःपुरिको जनः PrasaRā. 1. 37 (2); **2** situated in the inner part of the city गृहैरियान्तःपुरिकैः .... स्थित्वा प्रयातासि जयाय नः ... विप्रवरैः कृताशीः DvyāśraKā. 16. 70 (comm. अन्तःपुरिकैः पुरस्यान्तर्नगरमध्यभागे भवैर्गृहैरिव)

**अन्तःपुरिका** (antaḥpur-ikā) *f.* **A** lady or woman in the harem पत्तननगर-खर्वटयोपितामीश्वरभवने सहान्तःपुरिकाभिः प्रायेण क्रीडा KāmSū. 290. 12 (5. 5); 290. 16 (5.5); योषावेषांश्च नागरकान्प्रायेणान्तःपुरिकाः परिचारिकाभिः सह प्रवेशयन्ति KāmSū. 297. 18 (5. 6); अयम् ... अस्मत्प्रार्थनामन्तःपुरेभ्यो (v.l. °पुरिकाभ्यो) निवेदयेत् Śāk. 2. 18 (9); राज्यभारम् ... समर्प्यास्वरःप्रतिरूपाभिरन्तःपुरिकाभी रममाणः ... कुरु शरीरलाभम् DaśKuC. 134. 1; प्रकटितसंभ्रमाभिरन्तःपुरिकाभिरहूयाहूय गाढमाश्लिष्यमाणस्य ... पञ्चवर्षाणि तस्यान्तःपुरेऽतिचक्रमुः TilaMañ. 78. 15; ननु च यथा राज्ञो वृत्तं तथान्तःपुरिकाणामपि वक्तव्यमित्याह JayaMa. 251. 11 (*on* 4. 3); अन्तःपुरिका अन्तःपुरस्त्रियः JayaMa. 290. 15 (*on* 5.5); विज्ञाय चान्तःपुरिकाः पश्चाद्य परिचारिकाः BhāvPra. (Śā.) 289. 16 (10); **B** king's wife, queen अन्तःपुरिका वा प्रयोज्यया सह स्वचेटिकासंप्रेषणेन प्रीतिं कुर्यात् KāmSū. 292. 1 (5. 5); अन्तःपुरिका कुर्यात्सह वा प्रीतिं प्रयोज्याभिः KandaCū. v. 5. 23; v. 5. 13; **C** housewife रूपवतीर्जनपदयोषितः प्रीत्यपदेशेन मासं मासार्धं वासयत्यन्तःपुरिका वैदर्भाणाम् KāmSū. 294. 23 (5. 5); **D** female attendant in the harem अन्तःपुरिकाकरतलपरंपरासंचार्यमाणमूर्तिः ... मङ्गलप्रदीप इव मे शोकान्धकारमुन्मूलयिष्यति चक्षुषो: Kād. 62. 20; (स्वचेटिकासंप्रेषणेन) चेटिका स्त्रीश्वरप्रयुक्तान्तःपुरिका JayaMa. 292. 19 (*on* 5. 5) [ŚabdaRa. (Vā.) 2628 gives *antaḥpurikā* in the sense of *antaḥpurāṅganā*]

**अन्तःपुरिकाजन** (antaḥpurikā-jana) *m.* women-folk belonging to the harem, inmates in the harem अन्तःपुरिकाजनस्य राजकुमाराणां च ... संमान-परंपरतया क्लेशितोऽहम् Tantrākhyā. 85. 6; PañcT. 2. 79 (25) (257. 6); Pañcā. 169. 8; नृपतिः ... अन्तःपुरिकाजनेन ... अनुगम्यमानः ... उत्सवमकारयत् Kād. 74. 7; प्राजापत्या अपि पराजयन्तेऽन्तःपुरिकाजनस्य रूपम् TilaMañ. 268. 5; अथाजगाम तं देशं नाम्ना तालध्वजो नृपः। ... परिवृतः ... अन्तःपुरिकाजनैः BhaviP. 613B. 26 (iv. 3. 63); ऋत्विक्पुरोहिताचार्यैः सहान्तःपुरिकाजनैः। महिष्या सह यत्र स्यात् त्र्यश्रोऽसौ रङ्गमण्टपः BhāvPra. (Śā.) 295. 14 (10); कोसलेश्वरस्य सावरोधवधूजनस्य संभावनार्थमन्तःपुरिकाजनमयन्त्रणमुपस्थापय JānaPa. 4. 69 (6)

**अन्तःपुरिकादि** (antaḥpurikādi) *adj.* **A** queen etc. रिरंसुमन्तःपुरिकादिलोकम् DvyāśraKā. 16. 72 (comm. राज्ञ्यः); **B** attendant of the harem etc. मन्यन्तःपुरिकादीनां परस्परविग्रहेणम्। नावर्णयत् RājTa. (Ka.) 8. 3274.

**अन्तःपुरिकालक** (antaḥpurikālaka) *m., n.* lock of hair of the woman in the harem यस्य च ... अन्तःपुरिकालकेषु भङ्गो नूपुरेषु मुखरता ... अभूत् Kād.6.16.

**अन्तःपुरिकावृत्त** (antaḥpurikā-vṛtta) *n.* conduct or behaviour of a housewife एवं परस्त्रियः प्रकुर्वीत। इत्यन्तःपुरिकावृत्तम् KāmSū. 302. 2 (5.6);

JayaMa. 302. 23 (*on* 5. 6); उभयथाप्यन्तःपुरिकावृत्तमुच्यते JayaMa. 296. 3 (*on* 5. 6); 301. 12 (*on* 5. 6)

**अन्तःपुरिकासंघ** (antaḥpurikā-saṅgha) *m.* group of wives एकं चारित्रखण्डनाख्यं कार्यं परस्परस्यार्पयति योऽन्तःपुरिकासंघः JayaMa. 301. 11 (*on* 5.6)

**अन्तःपुरी** (antaḥpurī) *f.* A inmate or woman in the harem तस्य पञ्चशतान्यन्तःपुरीणां सुतनुश्रियाम् PārśvC. 6. 1058; ते घाताः शिरीषकोमलेष्वन्तःपुरीणामङ्गेषु लेगुः PrabaK. 10. 15; हाहाकारं कुर्वन्त्योऽन्तःपुर्यो बहिर्निर्गताः KathāK. 87. 19; B queen सर्वासामन्तःपुरीणां मध्येऽग्रमहिषी जाता KathāK. 32. 13; सा पश्चिमा शुकी अपि संसारे परिभ्रम्य हेमप्रभराज्ञो रतिनामा अन्तःपुरी जाता KathāK. 34. 13.

**अन्तःपुरीकृत** (antaḥpurī-kṛta) *adj.* (non-harem) rendered as or turned into the harem देवेन ... अतीव रमणीयोऽयं गिरिरन्तःपुरीकृतः ŚivaP. vii (1). 24. 7 (528B. 16)

**अन्तःपुरीगण** (antaḥpurī-gaṇa) *m.* group of women in the harem आलोक्यान्तःपुरीगणम्। रचितानेकरूपेव मन्यते स्म शची जनैः PāṇḍaC. 5. 489.

**अन्तःपुरीजन** (antaḥpurī-jana) *m.* women - folk in the harem सर्वोऽप्यन्तःपुरीजनः। तस्थावधोमुखीभूय PārśvC. 7.405; 1.760; शब्देन महता धर्मलाभितोऽन्तःपुरीजनः SamarāSaṁ. 6.339; ततः प्रकाश्य सर्वत्र वर्धापनमकार्यत। नदन्मङ्गलवादित्रं नृत्तमन्तःपुरीजनैः SamarāSaṁ. 7. 169; अन्तःपुरीजनः सर्वोऽपि तां ननाम KathāK. 19. 11.

**अन्तःपुरीय** (antaḥpurīya-) *denom.* [Vār. 1 *on* P. iii. 1. 10] 1A to behave as if being in the harem समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचुञ्चुः KāvyPra. 570. 1; अन्तःपुरीयसि रणेषु सुतीयसि त्वम् SāhiDa. 510. 1; 1B to treat or turn into the harem अन्तःपुरीयति वनं यवनावनिवल्लभः Ekāva. 8. 2 (84) (202. 15); 2 verbal root *antaḥpurīya*- स्वान्तेऽन्तःपुर इवाचरतीत्यर्थेऽन्तःपुरीयतीत्यधिकरणक्यचि ... वाचकलुप्ता द्रष्टव्या (उपमा) CitraMī. 26. 17; AlaṅkāKau. (Vi.) 118. 12.

**अन्तःपुरीयोग्या** (antaḥpurī-yogyā) *adj.* (*f.*) befitting or suitable for the inmates or women in the harem भूषणावलीः। आकृष्यान्तःपुरीयोग्या दायकेभ्यो नियोजय SamarāSaṁ. 9. 221.

**अन्तःपुरीयौवनरस** (antaḥpurī-yauvanarasa) *m.* essence of youth of the inmates or women in the harem गोविन्दचन्द्रो नाम राजा। अन्तःपुरीयौवनरसपरिमलग्राही PrabaK. 54. 22.

**अन्तःपुरीवर्ग** (antaḥpurī-varga) *m.* group of the inmates or women in the harem प्राप्तः स्वनगरीं राजा ... मुदितोऽन्तःपुरीवर्गः SamarāSaṁ. 7. 183; 9. 218.

**अन्तःपुरीवर्गसहित** (antaḥpurīvarga-sahita) *adj.* accompanied by the group of inmates or women in the harem अन्तःपुरीवर्गसहितो वन्दनाय चचाल राजा KathāK. 68. 26.

**अन्तःपुरुष** (antaḥ-puruṣa) *m.* inner person, i. e. soul यः कर्ता सोऽयं वै भूतात्मा। करणैः कारयितान्तःपुरुषः MaiU. 3. 3; मूर्धान्तःपुरुषस्यास्य दशहोता निगद्यते LakṣmīT. 29. 20; सर्वेषां पुरुषाणामन्तःपुरुषः स आत्मा स विज्ञेयः TripuTāU. 5. 1; परो दिवो ज्योतिः षष्ठस्तस्यैव सर्वत्र दीप्यमानत्वं निरूप्य तदेवान्तःपुरुषः उपसंहरति AṇuBh. 44. 12 (*on* i. 1. 23)

**अन्तःपुरेक्षक** (antaḥpurekṣaka) *m.* superintendent of the harem, chamberlain सुप्तकामोपमाः शुद्धाः पुरुषाः कृतबुद्धयः। अन्तःपुरेक्षकाः कार्या नृपेण शुचियोनयः Mānaso. ii. 2. 147.

**अन्तःपुरेवासा** (antaḥpure-vāsā) *adj.* (*f.*) resident of the harem क्व च सान्तःपुरेवासा वणिग्मात्रः क्व चास्म्यहम् PariPar. 3. 240.

**अन्तःपुरेश्वरी** (antaḥpureśvarī) *adj.* (*f.*) chief of, i. e. foremost among the queens ददर्श ... इष्टामन्तःपुरेश्वरीम्। कपिर्मन्दोदरीम् Rāmā. v. 8. 48.

**अन्तःपुरैकदेश** (antaḥpuraikadeśa) *m.* one side or corner of the harem दृष्टं च तेनान्तःपुरैकदेशे ... सुवर्णसूत्रम् Tantrākhyā. 20. 9.

**अन्तःपुरोचित** (antaḥpurocita) *adj.* befitting or suitable for the harem आरामः स्यादुपवनं कृत्रिमं वरमेव यत्। स्यादेतदेव प्रमदवनमन्तःपुरोचितम् AgniP. 362. 12.

**अन्तःपुरोत्तम** (antaḥpurottama) *n.* best or excellent harem अदृश्यीभूय गत्वा ततस्या अन्तःपुरोत्तमम्। समाविशद् भीमभटः KathāSaSāg. xii. 7. 231.

**अन्तःपुरोत्पन्न** (antaḥpurotpanna) *adj.* produced in the harem यद्रत्नमन्तःपुरे उत्पद्यते तस्य कः प्रभुः। अन्तःपुरोत्पन्नस्य किं वाच्यं यद्देशमध्येऽप्युत्पद्यते रत्नं तद्राजा यथेच्छं विनियुङ्क्ते ViviTīKa. 67. 28.

**अन्तःपुरोदर** (antaḥpurodara) *n.* interior or inside of the harem ... रविशङ्खिलेनान्तःपुरोदरम् BṛKathāMañ. ix. 1. 262; अत्रान्तरं नरपतेः सहसान्तःपुरोदरे। उदतिष्ठत् तस्मिन् करुणो रोदनध्वनिः BṛKathāMañ. xiii. 1. 66; एकामपश्यदायान्तीं दासीमन्तःपुरोदरात् PāṇḍaC. 2. 208.

**अन्तःपुरोदरगत** (antaḥpurodara-gata) *adj.* being in the interior of the harem नक्तंचरस्त्रियः। अन्तःपुरोदरगतं गत्वा रावणमूचिरे RāmāMañ. 265. 14.

**अन्तःपुरोद्भिन्ना** (antaḥpurodbhinnā) *adj.* (*f.*) dug up from the harem दीपिकासंबाधे गृहीतदीपिकानां समूहे। तद्वेषधारिणः। सुरङ्गया वा अन्तःपुरोद्भिन्नया। प्रवेशनिर्हारौ JayaMa. 300. 11 (*on* 5. 6)

**अन्तःपुरोद्यान** (antaḥpurodyāna) *n.* garden adjacent to the harem अन्तःपुरोद्यानादुदैरत ... धूमोद्गमः DaśKuC. 76. 11; चित्रलेखा ...। ततश्चान्तःपुरोद्याने प्रादुर्भूद्ददृशे तया ŚivaP. ii (5). 52. 52 (285A. 15)

**अन्तःपुरोपचार** (antaḥpuropacāra) *m.* etiquette of the harem, i. e. royal etiquette कृतशौचा तु या नारी सा बाह्याभ्यन्तरा स्मृता। अन्तःपुरोपचारे तु कुलजा कन्यकापि वा NāṭyaŚā. 22. 154.

**अन्तःपुरोपवन** (antaḥpuropavana) *n.* grove adjacent to the harem स्वस्मिन्नेवान्तःपुरोपवने स्वाग्रमहिष्यैव संपाद्यः किलायमर्थः DaśKuC. 76. 6; अहमपि ... अन्तःपुरोपवनमव्रजम् TilaMañ. 369. 10.

**अन्तःपुष्प** (antaḥ-puṣpa) *n.* 1 flower (placed) in the middle (of hair) अङ्गं चन्दनपाण्डु ...। अन्तःपुष्पसुगन्धिराजिकबरी सर्वाङ्गलग्नाम्बरं कान्तानां कमनीयतां विदधते ग्रीष्मेऽपराह्णागमे AmaŚ. 124; 2 menstrual discharge or menses (before it begins to flow regularly every month) वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्न हि अन्तःपुष्पं भवत्येव पनसोदुम्बरादिवत् VīraMi. (Śuddhi.) 10.8.

**अन्तःपूजा** (antaḥ-pūjā) *f.* inward or silent worship, pw.; MW.

**अन्तःपूति** (antaḥ-pūti) *adj.* (bad monk) rotten inside अन्तःपूतीभाव इति यथापीहैको दुःशीलो भवति पापधर्मा अन्तःपूतिरवस्रुतः ... शङ्खस्वरसमाचारः GiMs. iii (1). 50.7; अन्तपूति (v. l. अन्तःपूतिः DBHS.) अवस्रुतः MahāVyu. 278. 15 [DBHS.]

**अन्तःपूतीभाव** (antaḥpūtī-bhāva) *m.* the state of being (a bad monk) rotten inside पश्यसि त्वं भिक्षो ... महान्तं दारुस्कन्धमुह्यमानम्। ... सः ... नान्तःपूतीभावं गमिष्यति GiMs. iii (1). 49. 3; iii (1). 49. 6; iii (1). 50. 6 [DBHS.]

**अन्तःपूय** (antaḥ-pūya) *adj.* having pus inside, ulcerous अन्तःपूयेष्ववक्त्रेषु ... रोगेषु भेदनं प्राप्तमुच्यते SuśruS. iv. 1. 34; BhāvPra. (Bhā.) 8 (47). 47.

**अन्तःपूर्ण** (antaḥ-pūrṇa) *adj.* A complete within, inwardly content यतिः ... अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे MaitreU. 2. 27; VarāU. 4. 18; SarvaVeSāSaṁ. 966; B filled inside, inwardly full, MaitreU. 2. 27; VarāU. 4. 18; SarvaVeSāSaṁ. 966; काञ्चनचूर्णेनान्तःपूर्णमिव लक्ष्यते यद्य। ... तन्मरकतं महागुणमिति रत्नविदां मनोवृत्तिः YuktiKa. 129. 6.

**अन्तःपूर्व** (antaḥ-pūrva) *adj.* having the word *antar* as prior (member) अन्तःपूर्वात्तदर्थाढ्ञ् CāndraVyā. iii. 3. 24; ŚākaṭāVyā. iii. 1. 127; अन्तःपूर्वादिकण् SiddhaHe. vi. 3.137.

**अन्तःपूर्वपद** (antaḥ-pūrvapada) *adj.* having the word *antar* as prior (member) अन्तःपूर्वपदाट् ठञ् P. iv. 3. 60; अन्तःपूर्वपदात्तदर्थप्रधानात् भवे ठञ् भवति CāndraVṛ. *on* iii. 3. 24.

**अन्तःपूर्वाश्रकस्तम्भ** (antaḥpūrvāśraka-stambha) *adj.* having the pillars with eastward corners, i. e. angles (bent) inside कुड्यकम्। अन्तःपूर्वाश्रकस्तम्भमन्तर्लीनमलिन्दकम् ... एतत्पद्मवसन्तकम् ĪśānŚiPa. ii. 23. 136.

**अन्तःपृष्ठम्** (antaḥpṛṣṭham) *adv.* in the centre or middle (portion) of the back दक्षिणावर्तः ...। अन्तःपृष्ठं नाभिसमो बह्वायुः पुत्रवर्धनः। राजपत्न्याः SkandP. iv. 37. 136 (comm. पृष्ठमध्ये)

**अन्तःपेय** (antaḥ-péya) *n.* [AltGr. I. 335; II. 1. 126; DEBRU. 828] act of drinking up, act of sipping in भोजा जिग्युरन्तःपेयं सुरायाः ṚV. x. 107.9.

**अन्तःप्रकटितप्रीति** (antaḥprakaṭita-prīti) *adj.* who has displayed or exhibited the love at the heart दृष्ट्वा च तां (मुनिकन्यकाम्) तथाविधामतिरेकमन्तःप्रकटितप्रीतिमुत्पन्नदृढतरसौहृदोऽहम् ... अवदम् TilaMañ. 257. 22.

**अन्तःप्रकर्तनभय** (antaḥprakartana-bhaya) *n.* fear of being cut in the middle वीरैः प्रकाममभिमुक्तपत्रिणां नीरन्ध्रमम्बरतले प्रसर्पताम्। अन्तःप्रकर्तनभयादिव क्षमः क्षेप्तुं न तीव्रकिरणोऽप्यभूत्करान् HammīMaKā. 12. 38.

**अन्तःप्रकल्पित** (antaḥ-prakalpita) *adj.* assumed in the mind न च संसर्गविच्छेदनिर्भासोऽन्तःप्रकल्पितः ŚlokaVār. 7. 24 (852. 6)

**अन्तःप्रकाश** (antaḥ-prakāśa) *adj.* A manifesting inward light, i. e. having sensation पश्वादयः ... अज्ञाने ज्ञानमानिनः। अहंकृताः ... अन्तःप्रकाशास्ते सर्वे ... परस्परम् ViṣṇuP. i. 5. 11; MārkP. 47. 21; BrahmāṇḍP. i. 5. 39; PadmP. v. 3. 58; ŚivaP. vii. 12. 7 (514A. 8); B having light inside सर्वतस्तमसा

चैव दीपः कुम्भवदावृतः। बहिरन्तःप्रकाशश्च शुद्धो निःसंज्ञ एव च VāyuP. i. 6. 36; Bii having illumination within मय्येवैताः स्फुरन्तीह विचित्रेन्द्रियवृत्तयः। तेजसान्तःप्रकाशेन यथाग्निकणपङ्क्तयः SaṁnyāU. 2. 23; YogVā. v. 34. 20; C having enlightenment within कामस्य क्रोधस्य सहते च यः। तौ जेतुं वर्ष्मविरहात्स सुखं चिरमश्नुते। अन्तर्निष्ठोऽन्तःप्रकाशोऽन्तःसुखोऽन्तोरतिर्लभेत् ... अक्षयं ब्रह्म GaṇeP. ii. 141. 23.

**अन्तःप्रकाश** (antaḥ-prakāśa) *m.* enlightenment within स्वयंभुवः ... अन्तःप्रकाशमध्यासितवन्तम् ... परमात्मानमुपेयुषो गुरुणापि प्रतिपन्नगुरुभावस्य ... भगवतः सिद्धपरमेष्ठिनोऽष्टतमीमिष्टिं करोमि YaśasCam. ii. 374. 23; यथा सूर्यवपुर्भूत्वा प्रकाशाय चरेद्धरिः। सर्वेषां जगतामेव हरिरालोकहेतवे। तथैवान्तःप्रकाशाय पुराणावयवो हरिः। विचरेत् PadmP. i. 61. 61.

**अन्तःप्रकाशिका** (antaḥ-prakāśikā) *adj. (f.)* illuminating the mind पूतात्मानो ह्यकल्मषाः। विशन्ति ... भास्करीं तैजसीं कलाम्। ... वायुमार्गस्थिता व्योम्नि द्वितीयान्तःप्रकाशिका BhaviP. 216A. 14 (i. 144. 13)

**अन्तःप्रकुपित** (antaḥ-prakupita) *adj.* disturbed or disordered inside (the body) अन्तःप्रकुपिता दोषा विसर्पन्त्यन्तराश्रये। बहिर्बहिःप्रकुपिताः सर्वत्रोभयसंश्रिताः CaraS. vi. 21. 25 (1941 Ed.)

**अन्तःप्रकृति** (antaḥ-prakṛti) *f.* (pl.) 1A members or constituting elements inside यदा बाह्याः प्रकृतयोऽन्तःप्रकृतयो वा प्रत्येकशो युगपद्वा प्रकुप्यन्ति। तद्व्यसनं प्रदोष इति मन्तव्यम् Tantrākhyā. 17. 20; PañcT. 1. 59 (9) (62. 5); Pañcā. 34. 8; 1B ministry or body of ministers of a king अणुरप्युपहन्ति विग्रहः प्रभुमन्तःप्रकृतिप्रकोपजः। अखिलं हि हिनस्ति भूधरं तरुशाखान्तनिघर्षजोऽनलः Kirātā. 2. 51 (comm. अन्तरङ्गामात्याद्यपरागसमुत्थः); SūktiRa. 105. 5; 2A one's own class of people, internal relation अन्तःप्रकृतिजः कोपो विघाताय प्रभोर्मतः MahāP. 35. 18 (F. N. स्ववर्गे); 2B natural within को नामान्तःप्रकृतिकुटिलो दुर्गतिं नाभियाति SubhāRaK. 38. 29; 3 internal nature or constitution (of a man), cf. अन्तःप्रकृतिक्षत1 [heart or soul, PW.; MW.; Apte: internal dissension or disaffection, Apte]

**अन्तःप्रकृतिक्षत** (antaḥprakṛti-kṣata) *n.* 1 disappearance, i. e. loss of internal nature or constitution (of a man) (असौ) तत्रैव चेतोनयनेन्द्रियेषु स्थितेषु दूतेष्विव लोभितेषु। जातेषु चान्तःप्रकृतिक्षतेषु देहावशेषेण कथंचिदस्थात् RāghPāṇ. (Dha.) 5. 14 (comm. अन्तरङ्गस्वभावनाशेषु); 2 wound inside the body, RāghPāṇ. (Dha.) 5. 14 (comm. अन्तः प्रकृतौ क्षतेषु जातेषु)

**अन्तःप्रकृतिसंक्षोभ** (antaḥprakṛti-saṅkṣobha) *m.* 1 disorder in the internal nature अन्तःप्रकृतिसंक्षोभं मूलेद्वर्तं च कर्मणाम्। योगशक्त्या स योगीन्द्रो विजिगीषुरिवातनोत् MahāP. 20. 241; 2 dissension in the ministry or the body of ministers, MahāP. 20. 241.

**अन्तःप्रकोप** (antaḥ-prakopa) *m.* A inner anger or wrath राक्षसास्ते अन्तःप्रकोपात्परिवृत्तनेत्राः केचित् ... निपेतुरुर्व्यां तु सहस्रकोट्या VarāṅgaC. 17. 60; B internal dissension or disturbance एषां हि सन्तोऽन्यतमप्रकोपमन्तःप्रकोपं समुपादिशन्ति NītiSā. 16. 20.

**अन्तःप्रकोपदहन** (antaḥprakopa-dahana) *m.* fire in the form of inner anger or wrath दितिजाधिपेषु अन्तःप्रकोपदहनोद्धतहेतिदाहभीत्येव कण्ठविकचोत्पलमालिकासु(?केषु)। ... पलायनपरायणतां गतेषु HarVi. 35. 4.

**अन्तःप्रकोपन** (antaḥ-prakopana) *n.* internal dissension or revolt संधाय युवराजेन यदि वा मुख्यमन्त्रिणा। अन्तःप्रकोपनं कार्यमभियोक्तुः स्थिरात्मनः Hitopa. 3. 91.

**अन्तःप्रकोपरहित** (antaḥprakopa-rahita) *adj.* free from internal dissension or revolt शुद्धान्तः ... जयी भवेत्। शुद्धान्तः अन्तःप्रकोपरहितः VīraMi. (Rājanīti.) 281. 16.

**अन्तःप्रक्षिप्त** (antaḥ-prakṣipta) *adj.* poured inside (the crucible) वह्नौ धूमायमानेऽन्तःप्रक्षिप्तरसधूमतः। स्वर्णाद्यापादनं लोहे धूमवेधः स ईरितः RasRaSa. 8. 83.

**अन्तःप्रगुणित** (antaḥ-praguṇita) *adj.* which is made even or straight inside, i. e. properly arranged inside मध्ये च तत्रैदमन्तःप्रगुणितावस्थानतल्पं माणिक्यभवनमास्ते UdaySuKa. 134. 25.

**अन्तःप्रचलित** (antaḥ-pracalita) *adj.* A moving about in the sky जलधरैः ... जलधिभिरिवान्तःप्रचलितैः ... धरा धारापातैः ... भिद्यत इव Mṛcch. 5. 22 (comm. अन्तः गगनमध्ये) (*but* inwardly moved, MW.); B agitated within, Mṛcch. 5. 22.

**अन्तःप्रज्ञ** (antaḥ-prajña) *adj.* who cognises ... conscious within सोऽयमात्मा चतुष्पात् ... स्वप्नस्थानोऽन्तःप्रज्ञः ... तैजसो द्वितीयः पादः MāṇḍūU. 4; NṛsiṁPūTāU. 4. 1 (223. 7); नान्तःप्रज्ञं न बहिःप्रज्ञम् ... न प्रज्ञं नाप्रज्ञम्। ... चतुर्थं मन्यन्ते MāṇḍūU. 7; NṛsiṁPūTāU. 4. 1 (223. 11); RāmoTāU. 402. 3 (3. 0); अन्तःप्रज्ञं बहिःप्रज्ञं घनप्रज्ञमुदाहृतम्। हृत्कण्ठतालुकं चेति BṛParāSm. 3. 14; बहिष्प्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः GauḍKā. 1. 1; नान्तःप्रज्ञो नो बहिःप्रज्ञको वा ... प्रत्यगेवाहमस्मि SarvaVeSāSaṁ. 840; पुरुषम् ... नान्तःप्रज्ञं न बहिःप्रज्ञं न स्थूलम् ... इति च एवं वेद NāraPaU. 9. 20; सोऽयमात्मा ... नान्तःप्रज्ञो न बहिःप्रज्ञः SubāU. 5; परमेश्वरः ... नान्तःप्रज्ञो बहिःप्रज्ञो न चोभयगतस्तथा LiṅgaP. i. 86. 97 [internally wise, knowing one's self, PW.; MW.; knowing oneself, with an enlightened soul, Apte]

**अन्तःप्रज्वलत्** (antaḥ-prajvalat) *adj.* burning inside उदधिः ... अन्तःप्रज्वलदौर्वदाहसततातप्यस्तोऽभविष्यन्न चेत् ŚrīKaC. 1. 49.

**अन्तःप्रज्वलित** (antaḥ-prajvalita) *adj.* burning within अन्तःप्रज्वलितस्य कामशिखिनो दाहार्जितैर्भस्मभिः ... तनोः पाण्डुत्वमुन्मीलति SubhāRaK. 18. 14.

**अन्तःप्रज्वलिताग्नि** (antaḥprajvalitāgni) *m.* fire burning inside संदंशेन गृहीतान्तःप्रज्वलिताग्निमध्यमुपनीय ... ऊर्ध्वं वर्धयेत् RaseCin. 8. 32 (90. 17)

**अन्तःप्रणव** (antaḥ-praṇava) *m.* (inarticulate) sacred syllable '*om*' (ringing) within अन्तर्बहिश्चोभयात्मकत्वात्त्रिविधो ब्रह्मप्रणवः। अन्तःप्रणवो व्यावहारिकप्रणवः NāraPaU. 8. 1.

**अन्तःप्रणवनाद** (antaḥpraṇava-nāda) *m.* sound of the (inarticulate) sacred syllable '*om*' (ringing) within अन्तःप्रणवनादाख्यो हंसः प्रत्ययबोधकः PāśuBraU. 2. 3.

**अन्तःप्रतप्त** (antaḥ-pratapta) *adj.* heated inwards अन्तःप्रतप्तमरुसैकतदह्यमानमूलस्य चम्पकतरोः क्व विकासचिन्ता ŚārṅgaPa. 1002; Subhāṣi. 802.

**अन्तःप्रतिक्रिया** (antaḥ-pratikriyā) *f.* internal, i. e. oral treatment or remedy द्विविधा प्रतिक्रिया चैषां भवति अन्तःप्रतिक्रिया बाह्यप्रतिक्रिया च Hastyāyur. 120. 14 (1. 17)

**अन्तःप्रतिबिम्बित** (antaḥ-pratibimbita) *adj.* A reflected inside असौ हिरण्यवर्णासु तास्वन्तःप्रतिबिम्बितः ŚāliC. 2. 133; पौराः शुक्रदिने भान्ति यत्रान्तःप्रतिबिम्बिताः। राज्ञेव निकटं नीताः RājTa. (Śrī.) 1(7). 260; B reflected, i. e. existing within चराचरं जगत्सर्वं यस्यान्तःप्रतिबिम्बितम्। तस्मै युगादिदेवाय ... नमः KumāPraPra. 40. 12.

**अन्तःप्रतिभास** (antaḥ-pratibhāsa) *m.* flashing in the mind (उत्प्रेक्षा वस्तुसाम्येऽपि तात्पर्यगोचरो मतः) तात्पर्यं पदार्थव्यतिरिक्तवृत्ति वाक्यार्थजीवितभूतं वस्त्वन्तरमेव गोचरो विषयस्तद्विदामन्तःप्रतिभासः VakroJī. 199. 3.

**अन्तःप्रतिष्ठ** (antaḥ-pratiṣṭha) *adj.* A existing or abiding within न केवलमन्तःप्रतिष्ठं पुरुषमपीत्यपेरर्थः Bhām. 190. 16 (*on* i. 2. 26); B abiding, i. e. hiding inside अन्तःप्रतिष्ठशशकवीच्छ(क्ष?)कजनावेष्ट्यमानकण्ठीरवः ... । बभूव महान् ... मृगयासंरम्भः UdaySuKa. 44. 3.

**अन्तःप्रतिष्ठत्व** (antaḥpratiṣṭha-tva) *n.* the state of existing or abiding within अन्तःप्रतिष्ठत्वं माध्यस्थ्यं तेन साक्षित्वं लक्षयति Bhām. 191. 19 (*on* i. 2. 28); अन्तःप्रतिष्ठत्वेन सह समुच्चयः सूत्रगतापिशब्दार्थः VedāntKa. 146. 14 (*on* i. 2. 26)

**अन्तःप्रतिष्ठत्वमात्र** (antaḥpratiṣṭhatva-mātra) *n.* mere existence or abidance within अन्तःप्रतिष्ठत्वमात्रं हि परस्यापि संभवति ŚrutaPra. iB. 343. 23 (*on* i. 2. 27)

**अन्तःप्रतिष्ठान** (antaḥ-pratiṣṭhāna) *n.* existence or abidance within शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च न BrahmSū. i. 2. 26; Bhām. 189. 17 (*on* i. 2. 24); न परमेश्वरो वैश्वानरो भवितुमर्हति। कुतः। शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च BrahmSūBh. (Śaṅ.) 134. 5 (*on* i. 2. 26); अन्तःप्रतिष्ठानं जाठरपरिग्रहे व्याख्याय ... आह PrakaVi. 213. 25; (विश्वानरस्य) पाचकत्वेनान्तःप्रतिष्ठानं च प्रतीयते BrahmSūBh. (Ma.) 13A. 9 (*on* i. 2. 26); वैश्वानरपुरुषस्य ... मूर्धादिचिबुकान्तावयवैरन्तःप्रतिष्ठानात् पुरुषेऽन्तःप्रतिष्ठितत्वम् VedāntKa. 147. 2 (*on* i. 2. 26); अग्निशब्दनिर्दिष्टस्यैव अन्तःप्रतिष्ठानं विवक्षितम् ŚrutaPra. iB. 343. 22 (*on* i. 2. 27); (नेह वैश्वानरशब्देन परमात्मा वक्तुं शक्यः) अन्तःप्रतिष्ठानाच्च, विशेषतः औदर्याग्नेर्निर्देशात् VedāntKau. 72. 19 (*on* i. 2. 27); विरुद्धधर्माः शब्दादयोऽन्तःप्रतिष्ठानं च AṇuBh. 69. 13 (*on* i. 2. 26); तस्य ... पुरुषेऽन्तःप्रतिष्ठितं वैदेवत्यन्तःप्रतिष्ठानाच्च GoviBh. 38. 116 i. 2. 26); (*on* i. 2. 27) [residence in the interior, MW.; Apte]

**अन्तःप्रतिष्ठानमात्र** (antaḥpratiṣṭhāna-mātra) *n.* mere existence or abidance within अत एव पुरुषमपि चैनमधीयत इति सूत्रखण्डं नान्तःप्रतिष्ठानमात्रपरिहारपरम् ŚrutaPra. iB. 345. 9 (*on* i. 2. 27)

**अन्तःप्रतिष्ठानश्रवण** (antaḥpratiṣṭhāna-śravaṇa) *n.* mention of the

existence or abidance within अन्तःप्रतिष्ठानश्रवणाद्य न वैश्वानरः परमात्मा, किं तु जाठराग्निः VedāntPāSau. 72. 8 (*on* i. 2. 27)

**अन्तःप्रतिष्ठानसहचर** (antaḥpratiṣṭhāna-sahacara) *adj.* accompanied, i.e. complimented by the existence or abidance within भूततृतीयस्य तु पुरुषेऽन्तःप्रतिष्ठितत्वं तदेकदेशभूतजाठरद्वारकमिति वक्तव्यम्, अतोऽन्तःप्रतिष्ठानसहचरैर्हेतुभिर्जाठरभावः शङ्कितः ŚrutaPra. iB. 343. 30 (*on* i. 2. 27)

**अन्तःप्रतिष्ठानादिलिङ्ग** (antaḥpratiṣṭhānādi-liṅga) *n.* indicatory mark in the form of existence or abidance within (the body) etc. तथान्तःप्रतिष्ठानादिलिङ्गसहकृतोऽग्न्यादिशब्दो जाठरपक्षपाती प्रतिभाति PrakaVi. 210. 22.

**अन्तःप्रतिष्ठानोपन्यास** (antaḥpratiṣṭhānopanyāsa) *m.* mention of existence or abidance within शब्दादिभ्य इत्यादिसूत्रखण्डं जाठरशङ्कामात्रपरम् ... अन्तःप्रतिष्ठानोपन्यासात् ŚrutaPra. iB. 343. 25 (*on* i. 2. 27)

**अन्तःप्रतिष्ठित** (antaḥ-pratiṣṭhita) *adj.* [*f.* - ā] **Ai** established or installed inside पूजयामश्च भगवन्तमन्तःप्रतिष्ठितमस्य देवतायतनस्य देवम् TilaMañ. 157. 3; स्फाटिकप्रासादानामन्तःप्रतिष्ठिताः ... वन्दमानो जिनानाम् ... प्रतिमाः ... निर्जगाम (समरकेतुः) TilaMañ. 226. 2; अपश्यं च तत्रान्तःप्रतिष्ठितम् ... अम्बिकानाथम् UdaySuKa. 65. 22; तत्र चान्तःप्रतिष्ठितोऽस्ति देवश्चन्द्रकेतुनामा महेश्वरः UdaySuKa. 103. 29; **Aii** stationed inside बहिर्मण्डपमगच्छम्। सोऽपि शून्य एव केवलमन्तःप्रतिष्ठितं क्षेत्रपालमालोक्य तस्यापि वाक्योपहारमकरवम् UdaySuKa. 61. 13; **B** existing or abiding within स यो हैनमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद BrahmSūBh. (Śrī.) i. 389. 3 (*on* i. 2. 27) [residing inside, MW.]

**अन्तःप्रतिष्ठितत्व** (antaḥpratiṣṭhita-tva) *n.* the state of existing or abiding within पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं तस्य स्यात् BrahmSūBh. (Śaṅ.) 135. 14 (*on* i. 2. 26); 137. 3 (*on* i. 2. 28); अन्तःप्रतिष्ठितत्वं प्रादेशमात्रत्वं च न ... परब्रह्मणः संभवतः Bhām. 189. 20 (*on* i. 2. 24); अन्तःप्रतिष्ठितत्वं वैश्वानरस्यामनन्ति वाजसनेयिनः VedāntKau. 72. 20 (*on* i. 2. 27); 76. 3 (*on* i. 2. 33); तदेतेभ्यो हेतुभ्योऽन्तःप्रतिष्ठितत्वमपि न भगवद्धर्मः AṇuBh. 69. 17 (*on* i. 2. 26)

**अन्तःप्रतिष्ठितत्ववचन** (antaḥpratiṣṭhitatva-vacana) *n.* statement regarding the state of existing or abiding within जाठराग्न्यपरिग्रहे ... अन्तःप्रतिष्ठितत्ववचनं तावन्न विरुध्यते BrahmSūBh. (Śaṅ.) 137. 7 (*on* i. 2. 28)

**अन्तःप्रतिष्ठितत्ववत्** (antaḥpratiṣṭhitatva-vat) *adv.* like the state of existing or abiding within अन्तःप्रतिष्ठितत्ववत्पुरुषत्वमपि वैश्वानरमुद्दिश्य विधेयम् VedāntKa. 146. 14 (*on* i. 2. 26)

**अन्तःप्रतिष्ठितत्वोक्ति** (antaḥpratiṣṭhitatvokti) *f.* statement regarding the state of existing or abiding within एवमन्तःप्रतिष्ठितत्वोक्त्यनुरोधेन ... द्युमूर्धत्वादिकमत्र ग्राह्यम् ŚivārkaMaDī. i. 389. 33 (*on* i. 2. 27)

**अन्तःप्रतिहतातपा** (antaḥpratihatātapā) *adj.* (*f.*) which has obstructed the rays of the sun (from entering) inside प्राविशत् पुरीम् ... चित्रध्वजपताकाग्रैरन्तःप्रतिहतातपाम् BhāgP. i. 11. 13.

**अन्तःप्रतिहारम्** (antaḥpratihāram) *adv.* in the middle of the 'part' (of a Sāman) अन्तःप्रतिहारं स्तोभान् प्रतिहर्ता ब्रूयात् LāṭyāŚS. vi. 10. 25 (comm. प्रतिहारस्यान्तर्वर्तन्ते प्रतिहारमध्ये); DrāhyŚS. xviii. 3. 9 [within the syllable forming a *pratihāra*, pw; MW.]

**अन्तःप्रतिहारसीमन्** (antaḥ-pratihārasīman) *f., n.* boundary, i. e. the threshold of the door in the inner apartment or harem प्रविष्टमन्तःप्रतिहारसीमनि प्रतीक्ष्य जामातरमिन्दुशेखरम्। ... रमा चकार पाद्यम् ŚivLī. 11. 84.

**अन्तःप्रतीघात** (antaḥ-pratīghāta) *m.* internal disturbance, i. e. pain उदना(?उदान)विप्रतिपत्तावन्तःप्रतीघाततृष्णाश्लेष्माभिषण्णशिरोरोगमन्याग्रहकण्ठस्वरश्रोतोऽक्षिविकाराः ... संभवन्ति Hastyāyur. 388. 24 (3. 6)

**अन्तःप्रत्याहृति** (antaḥ-pratyāhṛti) *f.* restraint within अन्तःप्रत्याहृतिवशाच्चैत्यं चेत्र विभावितम्। मुक्त एव न संदेहो महासमतया तया AnnaU. 5. 90.

**अन्तःप्रदीपिका** (antaḥ-pradīpikā) *f.* **A** light or lamp inside (the house) धूपराजयः। अन्तःप्रदीपिकालोकचकितध्वान्तसंनिभाः MadhuVi. 1. 59 (comm. अन्तः गृहाभ्यन्तरेषु याः प्रदीपिकाः); **B** female servant in the inner apartment, MadhuVi. 1. 59 (comm. प्रदीपिकाः ... अन्तर्गृहस्थशुद्धान्तपालिका इति च गम्यते)

**अन्तःप्रदेश** (antaḥ-pradeśa) *m.* interior region अहं तु ... अन्तःप्रदेशे गृहैकदेशे स्थित्वा। ... प्रादुर्भविष्यामि DaśKuC. 154. 26.

**अन्तःप्रदेशक** (antaḥpradeśa-ka) *n.* interior region, inside चतुष्कं नवकं कुर्याद्विमन्तःप्रदेशके MānaSā. 9. 221.

**अन्तःप्रदेशस्थ** (antaḥpradeśa-stha) *adj.* existing or abiding inside, i. e. within अन्तःप्राणे येन क्रियते – अन्तःप्रदेशस्थस्य प्राणस्य त्यागग्रहणे येन क्रियते Bhāsk. ii. 241. 18 (*on* iii. 1. 11)

**अन्तःप्रपाका** (antaḥ-prapākā) *adj.* (*f.*) having ripeness, i.e. ripening inside कफादन्तःप्रपाकां तां विद्यादनुशयीम् SuśruS. ii. 13. 24.

**अन्तःप्रपाकिनी** (antaḥ-prapākinī) *adj.* (*f.*) having ripeness, i.e. ripening inside पादस्यानुशयीं तां तु विद्यादन्तःप्रपाकिनीम् RugVi. 55.20.

**अन्तःप्रबोधवत्** (antaḥprabodha-va(n)t) *adj.* having inner awareness or realisation (पुमान्) गलितद्वैतनिर्भासो मुदितोऽन्तःप्रबोधवान्। सुषुप्तमन(?ना) एवास्ते AkṣU.36.

**अन्तःप्रभ** (antaḥ-prabha) *adj.* having inner, i.e. intrinsic brilliance अन्तःप्रभोऽतिरागा मणिरत्नगुणाः समस्तानाम् BrSaṁ. 82. 3.

**अन्तःप्रभत्व** (antaḥprabha-tva) *n.* the state of having inner, i.e. intrinsic brilliance रत्नं धार्यमिदं नृपैः। ... अन्तःप्रभत्वं वैमल्यं सुसंस्थानत्वमेव च AgniP. 245. 7.

**अन्तःप्रभा** (antaḥ-prabhā) *f.* inner, i.e. intrinsic brilliance पण्डितः। स धर्मस्य वेदार्थं सूर्यस्यान्धः(v. l. ॰न्तः)प्रभामिव MahāBhā. iii. 34. 23.

**अन्तःप्रमातृमयी** (antaḥpramātṛ-mayī) *adj.* (*f.*) of the nature of inner cogniser मातरोऽन्तःप्रमातृमय्यः परमेशशक्तयः ताश्च प्रमातृत्वादेव सिद्धाः ParāTri. 248. 12.

**अन्तःप्रमार्जन** (antaḥ-pramārjana) *n.* internal cleansing क्षारः ... दुष्टव्रणेषु बहुशः प्रकोपिषु प्रयुज्यते। ... अन्तःप्रमार्जनेन तु गुल्मगरोदराग्निसादशूलानाहाश्मरीशर्करादिषु AṣṭāSaṁ. i. 190. 3 (1. 39)

**अन्तःप्रमोद** (antaḥ-pramoda) *m.* inner delight कान्तामन्तःप्रमोदादभिसरति मदभ्रान्ततारश्चकोरः MālaMā. 9. 176.

**अन्तःप्रमोदजनन** (antaḥpramoda-janana) *adj.* producing, i.e. causing the inner delight or bliss मुने व्रतमिदं. पुण्यं श्रुतम् ...। अन्तःप्रमोदजननम् SkandP. ii(2). 45. 1.

**अन्तःप्रमोदानुभाव** (antaḥpramodānubhāva) *m.* experience or expression of the feeling of inner delight (श्लिष्यन्ते चासितेक्षणाः) निश्चलीकृते अन्तःप्रमोदानुभावादीक्षणे याभिस्ताः SaraKaṇṭhā. 545. 17.

**अन्तःप्रयत्न** (antaḥ-prayatna) *m.* internal effort (of articulation) संवृतोऽकारः। इत्येषोऽन्तःप्रयत्नः ĀpiŚi. 3. 12; 8.6.

**अन्तःप्रयोग** (antaḥ-prayoga) *m.* [Loc.] in the middle of the procedure (of a sacrifice) अन्तःप्रयोगेऽप्येकतन्त्रत्वं यथोत्पन्नाया एव हि दक्षिणाभेदयुक्तायाः क्रतुमध्य इव बहिरपि प्रयोगः ŚāstrDī. 832. 7 (*on* xi. 4. 3); MayūMāli. 832. 7 (*on* xi. 4. 3); राजसूयप्रकरणपाठादन्तःप्रयोग एकः। ... तस्मात् बहिःप्रयोगे तन्त्रम् अन्तःप्रयोगे भेदः NyāyMāVi. 653. 28 (*on* xi. 4. 3)

**अन्तःप्रयोगकर्तव्यता** (antaḥprayogakartavya-tā) *f.* the state of being what is necessary to be done in the middle of the procedure (of a sacrifice) कपालेषु श्रपयतीति विधिः श्रपणस्यान्तःप्रयोगकर्तव्यतासिद्ध्यर्थः स्यात् VidhiRa. 9 (59.20)

**अन्तःप्रयोगम्** (antaḥprayogam) *adv.* in the middle of the procedure (of a sacrifice) न हि दर्शपूर्णमासयोरन्तःप्रयोगं श्रपणीयस्य पुरोडाशस्य प्रकृतिद्रव्योपादानाकाङ्क्षायाम् ...अतण्डुलपिष्टावस्थयोरपेक्षणं गौरवदोषेण परित्यज्यते ŚivārkaMaDī. ii. 276. 23 (*on* ii. 2. 40)

**अन्तःप्रयोगसंबद्ध** (antaḥprayoga-sambaddha) *adj.* connected with the middle of the procedure (of a sacrifice) 'यूपस्य स्वरुं करोती' ति तदन्तःप्रयोग-संबद्धं स्वरुकार्यमञ्जनं कर्तुं यमुपादत्ते तं यूपादिति ŚābaBh. 2171. 15 (*on* xi. 3. 9)

**अन्तःप्रयोगा** (antaḥ-prayogā) *adj.* (*f.*) which falls in the middle of the procedure (of a sacrifice) 'यूपस्य स्वरुं करोती' ति स्वकालैवास्योत्पत्तिः। न खल्वेषाप्यन्तःप्रयोगैव ŚābaBh. 2170. 22 (*on* xi. 3. 8)

**अन्तःप्ररूढ** (antaḥ-prarūḍha) *adj.* **A** grown inside अन्तःप्ररूढस्य ...पारिजाततरोः ...शाखाततिभिः समन्ततः स्थगितम् ...रम्भागृहमपश्यत् (समरकेतुः) TilaMañ. 228.9; TārāŚa. 19; **Bi** grown, i.e. developed in the mind उदीर्णमाकर्ण्य तमापतन्तमन्तःप्ररूढेन भयेन मूढः Surath. 2. 59; काचिदन्तःप्ररूढस्य कुतूहलमहीरुहः। कुसुमेनोद्गतेनेव स्मितेनाकलिता बभौ TārāŚa. 10; **Bii** deep-rooted in the mind (जगत्सत्यतानिश्चयः) निश्चयोऽन्तःप्ररूढः संपन्नोऽभ्यसनं विना। नाशमायाति लोकेऽस्मिन् न कदाचन YogVā. iv. 31. 20.

**अन्तःप्ररूढार्ति** (antaḥprarūḍhārti) *f.* distress grown, i.e. developed in the mind मन्त्रिष्वन्तःप्ररूढार्तिचिन्तानिष्प्रतिपत्तिषु। ...भजतीवार्जवं वक्रे शठे शाठ्यमिवोज्झति RājaC. 28. 66.